विहारमग्रहारं च ज्ञालोराख्यं च निर्ममे ॥ ९८ ॥
शचीनरस्तस्य सूनुः क्षितिं क्षितिशचीपतिः ।
ततः श्रीमान् क्षमाशीलो ररक्षाक्षतशासनः ॥ ९९ ॥
राज्ञाग्रहारयोः कर्ता शमांगासाशनारयोः ।
सोऽभूदपुत्रः सूत्रामविष्टराईसमाश्रयी ॥ १०० ॥
प्रपौत्रः शकुनेस्तस्य भूपतेः प्रपितृव्यजः ।
अथावहदशोकाख्यः सत्यसन्धो वसुन्धरां ॥ १०१ ॥
यः शान्तवृजिनो राजा प्रपन्नो जिनशासनं ।
शुष्कलेऽत्र वितस्तात्रौ तस्तार स्तूपमण्डलैः ॥ १०२ ॥
धर्मारण्यविहारान्तर्वितस्तात्रपुरेऽभवत् ।
यत् कृत्यं चैत्यमुत्सेधावधि प्राप्यक्षमेक्षणं ॥ १०३ ॥
स षण्णवत्या गेहानां लक्ष्यैर्लक्ष्मीसमुज्ज्वलैः ।
गरीयसीं पुरीं श्रीमांश्चक्रे श्रीनगरीं नृपः ॥ १०४ ॥
जीर्णं श्रीविजयेशस्य विनिवार्य सुधामयं ।
निष्कल्मषेणाश्ममयः प्राकारो येन कारितः ॥ १०५ ॥
सभायां विजयेशस्य समीपे च विनिर्ममे ।
शान्तावसादः प्रासादावशोकेश्वरसंज्ञितौ ॥ १०६ ॥
म्लेच्छैः संछादिते देशे स तदुच्छित्तये नृपः ।
तपः संतोषिताल्लेभे भूतेशात् सुकृती सुतं ॥ १०७ ॥

सोऽथो भूभृज्ज्वलोकोऽ भूद्भूलोकसुरनायकः ।
यो यशःसुधया शुद्धं व्यधाद्ब्रह्माण्डमण्डलं ॥ १०८ ॥
यस्य दिव्यप्रभावस्य कथाः श्रुतिपथं गताः ।
आश्चर्याश्चर्यतां यान्ति नियतं द्युसदामपि ॥ १०९ ॥
कोटिवेधिनि सिद्धे हि स रसे काटकार्पणेः ।
आसीत् सुषिरतां कर्तुं हेमाङ्गस्य ध्रुवं क्षमः ॥ ११० ॥
संस्तम्भ्याम्भःप्रविष्टेन तेन नागसरोऽन्तरं ।
तारुण्यं फणिकन्यानां निन्ये संभोगभव्यतां ॥ १११ ॥
तत्कालप्रबलप्रेक्षबौद्धवादिसमूहजित् ।
अवधूतोऽभवत् सिद्धस्तस्य ज्ञानोपदेशकृत् ॥ ११२ ॥
विजयेश्वरनन्दीशक्षेत्रज्येष्ठेशपूजने ।
तस्य सत्यगिरो राज्ञः प्रतिज्ञा सर्वदाऽभवत् ॥ ११३ ॥
ग्रामे ग्रामे स्थितैरश्वैर्धावनं प्रतिषिद्धवान् ।
स्वेनावकर्तुं सततं नागः कोऽपि सुहृत्तया ॥ ११४ ॥
स रुद्धवसुधान् म्लेच्छान् निर्वास्याखर्वविक्रमः ।
जिगाय क्षेत्रयात्राभिर्मही्मर्णवमेखलां ॥ ११५ ॥
ते यत्रोत्काटितास्तेन म्लेच्छाश्छादितमण्डलाः ।
स्थानमुत्काटडिम्बं तज्जनैरद्यापि गद्यते ॥ ११६ ॥
जित्वोर्वीं कन्यकुब्जाद्यां तत्रत्यं स न्यवेशयत् ।

चातुर्वर्ण्ये निजे देशे धर्म्यांश्च व्यवहारिणः ॥ ११७ ॥

यथावद्वृद्धिमप्राप्तं व्यवहारधनादिभिः ।

सामान्यदेशवद्राज्यं तावदस्मिन् हि मण्डले ॥ ११८ ॥

धर्माध्यक्षो धनाध्यक्षः कोशाध्यक्षश्चमूपतिः ।

दूतः पुरोधा दैवज्ञः सप्त प्रकृतयोऽभवन् ॥ ११९ ॥ युग्मं ॥

कर्मस्थानानि धर्म्याणि तेनाष्टादश कुर्वता ।

ततः प्रभृति भूपेन कृता यौधिष्ठिरी स्थितिः ॥ १२० ॥

स विक्रमप्रभावाभ्यां समुपार्जितया श्रिया ।

विदधे वारवालादीन्मण्डलेशान्समुदग्रधीः ॥ १२१ ॥

द्वारादिषु प्रदेशेषु प्रभावोग्राण्युदग्रया ।

ईशानदेव्या तत्पत्न्या मातृचक्राणि चक्रिरे ॥ १२२ ॥

श्रुतनन्दिपुराणः स व्यासान्तेवासिनो नृपः ।

सेवनं सोदरादीनां नन्दीशस्पर्द्धया व्यधात् ॥ १२३ ॥

प्रतिष्ठां ज्येष्ठरुद्रस्य श्रीनगर्यां वितन्वता ।

तेन नन्दीशसंस्पर्द्धा न मेने सोदरं विना ॥ १२४ ॥

विस्मारितो नित्यकृत्यं कार्यव्यग्रतयैकदा ।

विद्धसोदरजलाप्लावमालाभङ्गदुर्मनाः ॥ १२५ ॥

अपश्यन्निर्जलात् स्थानादकस्मादुत्थितं पयः ।

स सोदराविसंवादि वर्णस्वादादिभिर्गुणैः ॥ १२६ ॥ कुलकं ॥

प्रादुर्भूते ततस्तस्मिंस्तीर्थे कृतनिमज्जनः ।
स नन्दिरुद्रस्पर्द्धायां मानी पर्याप्तिमासदत् ॥ १२७ ॥
तेन जातु परीक्षार्थं निक्षिप्तः सोदरान्तरे ।
सपिधानाननः स्वर्णभृङ्गारः सुषिरोदरः ॥ १२८ ॥
दिनद्वयेन सार्द्धेन श्रीनगर्युद्गताम्भसः ।
उन्मग्नः स महीभर्तुस्तस्य चिच्छेद संशयं ॥ १२९ ॥
नूनं नन्दीश एवासौ भोक्तुं भोगानवातरत् ।
दृष्टादृष्टक्रियासिद्धिर्न भवेत् तादृगन्यथा ॥ १३० ॥
राज्ञस्तस्य कदाचित् तु व्रजतो विजयेश्वरं ।
ययाचे काचिदबला भोजनं मार्गमध्यगा ॥ १३१ ॥
यथेष्टमशनं दातुं ततोऽन्येन प्रतिश्रुते ।
व्यवृणोद्विकृता भूत्वा सा नृमांसाशने स्पृहां ॥ १३२ ॥
स सत्वहिंसाविरतस्तस्यै दातुं स्वविग्रहात् ।
अनुज्ञां प्रददौ भोक्तुं यदा सैवं तदाब्रवीत् ॥ १३३ ॥
बोधिसत्वोऽसि भूपाल कोऽपि सत्वोर्जितक्रमः ।
कारुण्यं प्राणिषु दृढं यस्येदृक् ते महात्मनः ॥ १३४ ॥
बौद्धभाषामजानानो माहेश्वरतया नृपः ।
को बोधिसत्वो यं भद्रे मां वेत्सीति जगाद तां ॥ १३५ ॥
पुनर्बभाषे सा भूयः श्रोतव्यं मत्प्रयोजन ।

अहं तूत्थापिता बौद्धैः क्रोधादिप्रकृतेस्त्वया ॥ १३६ ॥
लोकालोकाद्रियावत्स्थास्तामस्याः कृत्तिका वयं ।
बोधिसत्त्वैकशरणाः कात्स्न्येन तमसः क्षयं ॥ १३७ ॥
लोके भगवन्तो लोकनाथादारभ्य केचन ।
ये जन्तवो गतक्लेशा बोधिसत्त्वानवेहि तान् ॥ १३८ ॥
सागसेऽपि न कुप्यन्ति क्षमया चोपकुर्वते ।
बोधिं स्वस्यैव नेच्छन्ति ते विश्वधरणोद्यताः ॥ १३९ ॥
विहारतूर्यनिर्घोषैरुन्निद्रः प्रेरितः खलैः ।
पुरा भवान् व्यधात् क्रोधाद्विहारोद्दलनं यदा ॥ १४० ॥
महाशक्यः स नृपतिर्न शक्यो बाधितुं त्वया ।
तस्मिन् दृष्टे तु कल्याणि भविता ते तमःक्षयः ॥ १४१ ॥
अस्मद्गिरा प्रेरणीयो विहारकरणाय सः ।
दत्वा स्वक्षेमसंभारं त्वया मलिनितः खलैः ॥ १४२ ॥
तस्मिन् कृते न जायेत विहारच्छेदवैशसं ।
तस्य तत् प्रेरकाणां च प्रायश्चित्तं कृतं भवेत् ॥ १४३ ॥
क्रुद्धैर्बौद्धैरनुध्याता वद्धधाय प्रधाविता ।
अनुदिष्टा समाहूय बोधिसत्त्वैस्तदेत्यहं ॥ १४४ ॥ कुलकं ॥
तस्मात् सत्त्वातिरेकस्ते मिषादेवं परीक्षितः ।
क्षीणपापाद्य संवृत्ता स्वस्ति ते साधयाम्यहं ॥ १४५ ॥

कृतप्रतिश्रवे राज्ञि विहारकृतये पुनः ।
प्रहर्षोत्फुल्लनयना कृत्यादेवी तिरोदधे ॥ १४६ ॥
अथ कृत्याश्रमं कृत्वा विहारं वसुधाधिपः ।
तत्रैव क्षीणतमसं कृत्यादेवीमनन्दयत् ॥ १४७ ॥
विधाय सोऽश्मप्रासादं नन्दिक्षेत्रे क्षमापतिः ।
भूतेशाय समं कोषैः पूजां रत्नमयीं ददौ ॥ १४८ ॥
चीरमोचनतीर्थान्तर्गणरात्रं तपस्यता ।
ब्रह्मासननिविष्टेन ध्याननिष्पन्दमूर्तिना ॥ १४९ ॥
राज्ञा कनकवाहिन्याः सुचिरात् पुण्यकर्मणा ।
नन्दीशस्पर्शनोत्कण्ठा तेनानीयत कुण्ठतां ॥ १५० ॥
ह्लादोदयान् नृत्यगीतक्षणे नर्तितुमुत्थितं ।
प्रददौ ज्येष्ठरुद्राय स्वावरोधवधूशतं ॥ १५१ ॥
भुक्त्वैश्वर्यं स पर्यन्ते प्रतिष्ठं श्रीरमोचनं ।
पत्न्या समं ययौ राजा सायुज्यं गिरिजापतेः ॥ १५२ ॥
अथाशोककुलोत्पन्नो यद्वान्याभिजनोद्भवः ।
भूमिं दामोदरो नाम जुगोप जगतीपतिः ॥ १५३ ॥
श्रद्धा जाज्वलितस्योच्चैर्माहेश्वरशिखामणेः ।
अद्यापि श्रूयते यस्य प्रभावो भुवनाद्भुतः ॥ १५४ ॥
हरप्रसादमात्रेण सच्चरित्रानुरागिणा ।

बबन्ध सुखिना साख्यं येन वैश्रवणः स्वयं ॥१५५॥
कुवेर इव यो राज्ञामग्र्यः स्वाज्ञाविधायिनः ।
आदिश्य गुह्यकान् दीर्घं गुरुसेतुमबन्धयत् ॥१५६॥
सूदे दामोदरीये यत् तस्यासीत् स्वकृतं पुरं ।
सेतुना तेन तत्रेच्छन् कर्तुं सोऽम्भःप्रतारणं ॥१५७॥
क्षितं लोकोत्तरं किञ्चिच्चिकीर्षोरुन्नतात्मनः ।
रोक्ति क्वा धिक् प्रत्यूहा मितपूण्यतया नृणां ॥१५८॥
स हि कारयितुं यत्नैर्यतते स्म स्वमण्डले ।
दीर्घानश्ममयान् सेतूंस्तोयविप्लवशान्तये ॥१५९॥
तपोविभूतयोऽचिन्त्या द्विजानामुग्रतेजसां ।
तादृशामपि ये कुर्युः प्रभावस्य विपर्ययं ॥१६०॥
दायादादिबलैर्नष्टा दृष्टा भूयः समुत्थिता ।
श्रीर्विप्रावज्ञया राज्ञामपुनःसंभवा पुनः ॥१६१॥
श्राद्धार्थमुत्थितः स्नातुं द्विजैः कैश्चिद्बुभुक्षितैः ।
प्राक् स्नानाद्भोजनं राजा स कदाचिदयाच्यत ॥१६२॥
यियासुना वितस्तान्तर्यदा तेनावधीरितं ।
तदा प्रभावात् ते तस्य तां धुनीमग्रतो व्यधुः ॥१६३॥
सेयं वितस्ता दृष्टेनां भोजयास्मान् स तैरिति ।
उक्तोऽपि मायाविहितामज्ञासीत् सरिदाकृतिं ॥१६४॥

भोज्यं ददानि नाम्नातो विप्राः सर्पत साम्प्रतं ।
तेनेत्युक्तास्तमशपंस्ततः सर्पो भवेति ते ॥१६५॥
अशेषमेकेनैवाह्ना श्रुत्वा रामायणं तव ।
शापस्य शान्तिर्भवितेत्यूचिरे ते प्रसादिताः ॥१६६॥
स दामोदरसूदान्तर्धावन् दूरमुदन्यया ।
शापोष्माश्वासधूमेन जनैरद्यापि लक्ष्यते ॥१६७॥
अथाभवन् स्वनामाङ्कपुरत्रयविधायिनः ।
हुष्कजुष्ककनिष्काख्यास्त्रयस्तत्रैव पार्थिवाः ॥१६८॥
स विहारस्य निर्माता जुष्को जुष्कपुरस्य यः ।
जयस्वामिपुरस्यापि शुद्धधीः स विधायकः ॥१६९॥
ते तुरुष्कान्वयोद्भूता अपि पुण्याश्रया नृपाः ।
शुष्कलेत्रादिदेशेषु मठचैत्यादि चक्रिरे ॥१७०॥
प्राज्ये राज्यक्षणे तेषां प्रायः काश्मीरमण्डलं ।
भोज्यमास्ते च बौद्धानां प्रव्रज्योर्जिततेजसां ॥१७१॥
ततो भगवतः शाक्यसिंहस्य परिनिर्वृतेः ।
अस्मिन् शवलोकधातौ सार्द्धं वर्षशतं ह्यगात् ॥१७२॥
बोधिसत्त्वश्च देशेऽस्मिन्नेकभूमीश्वरोऽभवत् ।
स तु नागार्जुनः श्रीमान् षडर्हद्वनसंश्रयी ॥१७३॥
अथ निष्कण्टको राजा कण्टकोत्साग्रहारदः ।

अभीर्बभूवाभिमन्युः शतमन्युरिवापरः ॥१७४॥
स्वनामाङ्कशशाङ्कार्द्धशेखरं विरचय्य सः ।
परार्द्धविभवं श्रीमानभिमन्युपुरं व्यधात् ॥१७५॥
चन्द्राचार्य्यादिभिर्लब्धादेशं तस्मात् तदागमं ।
प्रवर्त्तितं महाभाष्यं चन्द्र व्याकरणं कृतं ॥१७६॥
तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः ।
नागार्जुनेन सुधिया बोधिसत्त्वेन पालिताः ॥१७७॥
ते वादिनः पराजित्य वादेन निखिलान् बुधान् ।
क्रियां नीलपुराणोक्तामच्छिन्दन्नागमद्विषः ॥१७८॥
मण्डले विप्लुताचारे विच्छिन्नबलिकर्मभिः ।
नागैर्जनक्षयश्चक्रे प्रभूतहिमवर्षिभिः ॥१७९॥
हिमान्यां बौद्धबाधाय पतन्त्यां प्रतिवत्सरं ।
शीते दार्वाभिसारादौ षण्मासान् पार्थिवोऽवसत् ॥१८०॥
तदा प्रभावः कोऽप्यासीद्बलिहोमविधायिनः ।
नानश्यन् यद्वशाद्विप्रा बौद्धाश्च निधनं गताः ॥१८१॥
नीलमुद्दिश्य देशस्य रक्षितारं महेश्वरं ।
काश्यपश्चन्द्रदेवाख्यस्तपस्तेपे ततो द्विजः ॥१८२॥
तस्य प्रत्यक्षतां यातो नीलस्तुहिनविप्लवं ।
न्यवारयत् जगादापि स्वपुराणविधिं पुनः ॥१८३॥

आद्येन चन्द्रदेवेन शमितो यक्षविप्लवः ।
द्वितीयेन तु देशेऽस्मिन् दुःसहो भिक्षुविप्लवः ॥१८४॥
राज्ञा तृतीयगोनर्दः प्राप्तराज्यस्तदन्तरे ।
यात्रायागादि नागानां प्रावर्तयत पूर्ववत् ॥१८५॥
राज्ञा प्रवर्तिते तेन पुनर्नीलोदिते विधौ ।
भिक्षवो हिमदोषाश्च सर्वतः प्रशमं ययुः ॥१८६॥
काले काले प्रजापुण्यैः संभवन्ति महीभुजः ।
यैर्मण्डलस्य क्रियते दूरोत्सन्नस्य योजनं ॥१८७॥
ये प्रजापीडनपरास्ते विनश्यन्ति सान्वयाः ।
नष्टं तु ये योजयेयुस्तेषां वंशानुगाः श्रियः ॥१८८॥
इत्येतत् प्रतिवृत्तान्तं देशेऽस्मिन् वीक्ष्य लक्षणां ।
भाविनां भूमिपालानां प्राज्ञैर्ज्ञेयं शुभाशुभं ॥१८९॥
नवीकृतवतो देशं तस्य वंश्यैरियं मही ।
सिद्धैः प्रवरसेनाद्यैश्चिरं भुक्ता सुकर्मभिः ॥१९०॥
गोनर्दान्वयिनामाद्यः स रघूणां रघुर्यथा ।
नृपतिः काश्यपीं वर्षान् पञ्चत्रिंशतिमन्वशात् ॥१९१॥
वर्षषष्टिं सषण्मासैः षड्भिर्वर्षैर्विवर्जितां ।
विभीषणाभिधोऽरक्षत् क्षितिं गोनर्दनन्दनः ॥१९२॥
इन्द्रजिद्रावणावास्तां पितापुत्रौ नृपौ क्रमात् ।

पञ्चत्रिंशत् सहार्द्धाश्च वर्षास्त्रिंशद्द्वयोर्युः ॥१९३॥
बिन्दुरेखाच्छविर्यस्य दृष्टा भाव्यर्थशंसिनी ।
स रावणस्य पूजार्थं लिङ्गं भाति वटेश्वरः ॥१९४॥
चतुःशालमठस्यान्तः कृतायादापि भूभुजा ।
वटेश्वराय निखिलं तेन काश्मीरमण्डलं ॥१९५॥
पञ्चत्रिंशतमब्दानां क्ष्मां बुभोज महाभुजः ।
रावणाच्छोणिभृत्सूनुः सार्द्धामन्यो विभीषणः ॥१९६॥
किन्नरापरनामाथ किन्नरैर्गीतविक्रमः ।
विभीषणस्य पुत्रोऽभून्नरनामा नराधिपः ॥१९७॥
सदाचारोऽपि स नृपः प्रजाभाग्यविपर्ययैः ।
व्यधाद्विषयदोषेण महानर्थपरम्परां ॥१९८॥
विहारे निवसन्नेककिन्नरग्रामवर्त्तिनि ।
तस्य योगबलात् कोऽपि श्रमणोऽपाहरत् प्रियां ॥१९९॥
विहाराणां सहस्राणि तत्कोपान्निर्ददाह सः ।
श्रजिग्रहच्च तद्ग्रामान् द्विजैर्मध्यमठाश्रयैः ॥२००॥
सहापणं राजपथैर्नैयानोज्ज्वलनिम्नगं ।
स्फीतपुष्पफलोद्यानं स्वर्गस्येवाभिधान्तरं ॥२०१॥
दिग्जयोपार्जितैर्वित्तैर्जितवित्तेशपत्तनं ।
वितस्तापुलिने तेन नगरं निरमीयत ॥२०२॥ युगलकं ॥

तत्रैकस्मिन् किलोद्यामे स्वच्छस्वादुजलाश्रितः ।
आसीत् सुश्रवसो नाम्नो नागस्य वसतिः सरः ॥२०३॥
कदाचित् तस्य दूराध्वक्लान्तो मध्यदिने युवा ।
छायार्थी तत् सरःकच्छं विशाखाख्यो ऽविशद्द्विजः ॥२०४॥
सच्छायपादपतले समीरैः शमितक्लमः ।
शनैर्जलमुपस्पृश्य भोक्तुं सक्तून् प्रचक्रमे ॥२०५॥
तान् पाणौ मृद्नतेवाथ तेन तीरविहारिभिः ।
पूर्वमाकलितो हंसैः शुश्रुवे नूपुरध्वनिः ॥२०६॥
निर्गते मञ्जरीकुञ्जादपश्यत् पुरतस्ततः ।
कन्ये नीलनिचोलिन्यौ स केचिच्चारुलोचने ॥२०७॥
कर्णिकापद्मरागाब्जनाललीलायितस्पृशा ।
मनोज्ञधवलापाङ्गे तर्नीयो ऽञ्जनरेखया ॥२०८॥
हारिनेत्राञ्चलैर्मन्दमारुतान्दोलनाकुलैः ।
सनाथांसयुगे यूपपताकापल्लवैरिव ॥२०९॥ तिलकं॥
ते शशाङ्काननमे दृष्ट्वा शनैरभ्यर्णमागते ।
विरराशनारम्भात् मुक्तव्रीडजडीकृतः ॥२१०॥
भुञ्जाने कच्छमुच्छानौ शिम्बीरम्बुजलोचने ।
ते पुनर्दृष्टवानग्रे किञ्चिद्व्यापारितेक्षणः ॥२११॥
आकृतेर्का धिगीदृश्या भोज्यमेतदिति द्विजः ।

ध्यायन् कृपार्द्रः संमान्य स ते सक्तूनभोजयत् ॥२१२॥
उपनिन्ये च संगृह्य पुटकैश्चाटुसीत्कृतैः ।
तयोः पानाय पानीयं सरसः स्वच्छशीतलं ॥२१३॥
आचान्ते शुचितां प्राप्ते कृतासनपरिग्रहे ।
ततश्च वीजयन् पर्णतालवृन्तैरभाषत ॥२१४॥
भवत्यो पूर्वसुकृतैः कैश्चित् संप्राप्तदर्शनैः ।
चापलाद्विप्रसुलभात् प्रष्टुमिच्छत्ययं जनः ॥२१५॥
कल्याणिनीभ्यां कतमा पुण्या जातिः परिष्कृता ।
कुत्र वा त्यक्तमेतादृग्विरसं येन भुज्यते ॥२१६॥
एका तमूचे विद्यावामस्य सुश्रवसः सुते ।
स्वादुभोक्तव्यमप्राप्य किमीदृङ्नोपभुज्यते ॥२१७॥
पित्रा विद्याधरेन्द्राय प्रदातुं परिकल्पिता ।
इरावत्यग्रजैषा मे चन्द्रलेखा यवीयसी ॥२१८॥
पुनर्द्विजोऽभ्यधाद्देवं नैष्किञ्चन्यं किमस्ति वः ।
ताभ्यामवादि तातोऽत्र हेतुं वेत्ति स पृच्छ्यतां ॥२१९॥
ज्येष्ठेऽत्र कृष्णद्वादश्यां यात्रायै तक्षकस्य तं ।
आगतं चूडया तोयस्यन्दिन्या ज्ञास्यसि ध्रुवं ॥२२०॥
द्रष्टव्यस्यावामपि तदा तदभ्यर्णकृतस्थिती ।
इत्युक्त्वा फणिकन्ये ते क्षणादास्तां तिरोहिते ॥२२१॥

क्रमात् प्रववृते सोऽथ नटचारणसंकुलः ।
प्रेक्षिलोकसमाकीर्णस्तत्र यात्रामहोत्सवः ॥२२२॥
द्विजोऽपि कौतुकाकृष्टः पर्यटन् रङ्गमञ्जसा ।
कन्योक्तचिह्नज्ञातस्य नागस्यान्तिकमाययौ ॥२२३॥
पार्श्वस्थिताभ्यां कन्याभ्यां पूर्वमावेदितोऽथ सः ।
द्विजन्मने व्याजहार स्वागतं नागनायकः ॥२२४॥
ततः कथान्तरे क्वापि पृष्टः कारणमापदां ।
जगाद तं द्विजन्मानं निःश्वस्य श्वसनाशनः ॥२२५॥
अभिमानवतां ब्रह्मन् युक्तायुक्तविवेकिनां ।
युज्यते वश्यभोग्यानां दुःखानामप्रकाशनं ॥२२६॥
परदुःखं समाकर्ण्य स्वभावसुजनो जनः ।
उपकारासमर्थत्वात् प्राप्नोति हृदयव्यथां ॥२२७॥
वृत्तिं स्वां बहु मन्यते हृदि शुचं धत्तेऽनुकम्पोक्तिभिर्व्यक्तं
निन्दति योग्यतां मितमतिः कुर्वन् स्तुतीरात्मनः ।
गर्व्योपायनिषेवणं कथयति स्थास्नुं वहन् व्यापदं श्रुत्वा
दुःखमरुन्तुदां वितनुते पीडां जनः प्राकृतः ॥२२८॥
अत एव विवेकृणां यावदायुस्स्वमानसे ।
जीर्णानि सुखदुःखानि दह्यन्ते चितानलः ॥२२९॥
कः स्वभावगभीराणां लङ्घयेद्धृदिशापदं ।

बालापत्येन भृत्येन यदि सा न प्रकाश्यते ॥२३०॥
तदस्मिन्नेतयोर्बाल्याद्वस्तुनि व्यक्तिमागते ।
तवाग्रे गोपनं साधो न समाप्युपपद्यते ॥२३१॥
त्वयाप्यस्मद्धितार्थाय निसर्गसरलात्मना ।
ईषत् प्रयासः कल्याणिन् क्रियतां यदि शक्यते ॥२३२॥
योऽयं तरुतले मुण्डचूडालो दृश्यते व्रती ।
अमुना शस्यपालेन कान्दिशीकाः कृता वयं ॥२३३॥
अभुक्ते नारिकेरान्ने नवे नागैर्न भुज्यते ।
अयं नात्ति च तत् तेन समयेन हता वयं ॥२३४॥
क्षेत्राणि रक्षत्येतस्मिन् दृष्ट्वापि फलसम्पदं ।
भोक्तुं नैव समर्थाः स्मः प्रेता इव सरिज्जलं ॥२३५॥
तथा कुरु यथा भ्रश्येत् समयादेष नैष्ठिकः ।
योग्यां प्रतिक्रियां विद्मो वयमप्युपकर्तृषु ॥२३६॥
स तथेति ततो नागमुक्त्वा यत्नपरो द्विजः ।
अचिन्तयद्दिवारात्रौ शस्यपालस्य वञ्चनां ॥२३७॥
गूढं तस्य वह्निः क्षेत्रकुटीगर्भकृतस्थितेः ।
पच्यमानान्नभाण्डान्तर्नवान्नं न्यक्षिपत् ततः ॥२३८॥
भुञ्जान एव तत् तस्मिन् क्षणादेव जहार सः ।
अहीन्द्रः करकासारवर्षी स्फीतां फलश्रियं ॥२३९॥

तं च व्युत्क्रान्तदारिद्र्यः सरसोऽभ्यर्णमागतं ।
कृतोपकारमन्येद्युर्निजोर्वीमनयद्विजं ॥२४०॥
स तत्र पितुरादेशात् कन्याभ्यां विहितार्हणः ।
अमर्त्यसुलभैर्भोगैरतोष्यत दिने दिने ॥२४१॥
कालेन सर्वानामन्त्र्य स्वां भुवं गन्तुमुद्यतः ।
प्रतिश्रुतं वरं नागं चन्द्रलेखामयाचत ॥२४२॥
संबन्धायोग्यमपि तं कृतज्ञत्ववशंवदः ।
संविभेजे स भुजगः कन्यया च धनेन च ॥२४३॥
एवं नागवशावाप्तश्रियस्तस्य द्विजन्मनः ।
महान्नरपुरे कालस्तैस्तैर्नित्योत्सवैर्ययौ ॥२४४॥
भुजगेन्द्रतनुजापि तं पतिं पतिदेवता ।
अतोषयत् परार्ध्यश्रीशीलाचारादिभिर्गुणैः ॥२४५॥
तस्यां कदाचित् सौधाग्रस्थितायां प्राङ्गनाद्बहिः ।
आतपायोज्झितं धान्यं बुभुजे विहरन् हयः ॥२४६॥
तं वारयितुमाकुला भृत्या नासन् गृहे यदा ।
शिञ्जानमञ्जुमञ्जीरा सा तदावातरत् स्वयं ॥२४७॥
एकहस्तधृतावेगस्रस्तशीर्षांशुकान्तया ।
तया पाणिसरोजेन धावित्वा सोऽथ ताडितः ॥२४८॥
भोज्यमुत्सृज्य यातस्य फणिस्त्रीस्पर्शतस्ततः ।

सौवर्णीं पाणिमुद्राङ्कं तुरगस्योदपश्यत ॥२४९॥
तस्मिन् काले नरो राजा चारैस्तां चारुलोचनां ।
श्रुत्वा द्विजवधूं तस्थौ प्रागेवाङ्कुरितस्मरः ॥२५०॥
तस्य धावन्तमुन्मत्तमन्तःकरणवारणं ।
बलान्नियमितुं नासीदपवादभयाङ्कुशः ॥२५१॥
तस्मिन्नुद्दृप्तरागाग्निविप्लवे भूपतेः पुनः ।
उवाह ह्रयवृत्तान्तो दृप्तवातानुकारितां ॥२५२॥
चक्रे पर्यस्तमर्यादः सरलांगुलिशोभिना ।
सकाञ्चनकराङ्केन शशाङ्केनेव वारिधिः ॥२५३॥
व्रीडानिगडनिर्मुक्तो दूतैराकूतशंसिभिः ।
तामुपच्छन्दयन् सोऽथ सुन्दरीमुदवेजयत् ॥२५४॥
सर्वोपायैरसाध्याश्च विप्रस्तत्पतिरर्थ्यसौ ।
तेनायाच्यत लुब्धेन रागान्धानां कुतस्त्रपा ॥२५५॥
अथ निर्भर्त्सनां तस्मादपि प्राप्तवतासकृत् ।
हठेन हर्तुं तां राज्ञा समादिश्यन्त सैनिकाः ॥२५६॥
तैर्गृहाग्रे कृतास्कन्दो निर्गत्यान्येन वर्त्मना ।
त्राणार्थी नागभवनं सजानिः प्राविशद्द्विजः ॥२५७॥
ताभ्यामभ्येत्य वृत्तान्ते ततस्तस्मिन् निवेदिते ।
क्रोधान्धः सरसस्तस्मादुज्जगाम फणीश्वरः ॥२५८॥

उद्गीर्णाङ्गिरिव्हजीमूतजनितध्वान्तसन्ततिः ।
स घोराशनिवर्षेण ददाह सपुरं नृपं ॥२५९॥
दग्धप्राण्यङ्गविगलद्वसासृक्स्रोतवाहिनी ।
मयूरचन्द्रकाङ्केव वितस्ता समपद्यत ॥२६०॥
शरणाय प्रविष्टानां भयाच्चक्रधरान्तिकं ।
मुहूर्तान्निरदह्यन्त सहस्राणि शरीरिणां ॥२६१॥
मधुकैटभयोर्मेदः प्रागूर्वीरिव चक्रिणं ।
दग्धानां प्राणिनां तनू ततू तदा सर्वाङ्गमस्पृशत् ॥२६२॥
स्वसा सुश्रवसो नागी रमण्याख्याद्गिगह्वरात् ।
साह्वायकायाश्मराशीन् समादाय तदा ययो ॥२६३॥
सा योजनाधिके शेषे मार्गस्यारात् सहोदरं ।
कृतकार्यं निशम्याश्मवर्षं ग्रामेषु तत्यजो ॥२६४॥
योजनानि ततः पञ्च जाता ग्रामधरा शिला ।
सा रमण्यटवीत्यद्याप्यस्ति स्थूलशिलाविला ॥२६५॥
घोरं जनक्षयं कृत्वा प्रातः सानुशयोऽप्यहिः ।
लोकापवादनिर्विण्णः स्थानमुत्सृज्य तद्ययौ ॥२६६॥
दुग्धाब्धिधवलं तेन सरो दूरगिरौ कृतं ।
अमरेश्वरयात्रायां जनैरद्यापि दृश्यते ॥२६७॥
श्वशुरानुग्रहात्रागीभूतस्यापि द्विजन्मनः ।

जामातृसर इत्यन्यत् तत्र च प्रथितं सरः ॥२६८॥
प्रजानां पालमन्याजाभिःशङ्कासयकारिणाः ।
अकस्मादन्तकाः केचित् संभवन्ति तथाविधाः ॥२६९॥
अद्यापि तत् पुरं दग्धं शुभ्रीभूतं च तत् सरः ।
उपचक्रधरं दृष्ट्वा कथेयं स्मर्यते जनैः ॥२७०॥
राज्ञां रागः कियान्नाम दोषः स्वल्पदृशां मतेः ।
तत् तस्य तेन संवृत्तं यन्नाभूत् क्वापि कस्यचित् ॥२७१॥
सतीदिक्तविप्राणामप्येकस्य प्रकोपतः ।
श्रुतो हि प्रतिवृत्तान्तं त्रैलोक्यस्यापि विप्लवः ॥२७२॥
चत्वारिंशतमब्दान् स मासैश्चोनां त्रिभिः समां ।
भुवं भुक्त्वा क्षितिवृषा दुर्णयेन क्षयं ययौ ॥२७३॥
अप्यल्पकालसन्दृष्टप्राकाराट्टालमण्डलं ।
तत् किन्नरपुरं लेभे गन्धर्वनगरोपमां ॥२७४॥
एकस्तु तनयस्तस्य वैचित्र्यात् कर्मणां गतेः ।
स्वधात्र्या विजयक्षेत्रं नीतः प्राणैर्न तत्यजे ॥२७५॥
राजा सिद्धाभिधः सोऽथ तथा निःशेषितं जनं ।
नवीचकार जलदो दावदग्धमिवाचलं ॥२७६॥
इति वृत्तं महाश्चर्यं तस्य पित्र्यं महामतेः ।
संसारासारताज्ञेन प्राप पुण्योपदेशतां ॥२७७॥

भोगयोगेन मालिन्यं नेतुं मध्यगतोऽपि सः ।
न शक्यते स्म पङ्केन प्रतिमेन्दुरिवामलः ॥२७८॥
दर्पस्वरोष्मभूपालमध्ये निर्ध्यायतोऽनिशं ।
सुधासूतिकलामौलिं तस्यैवोष्मापघतो ययौ ॥२७९॥
गणितं गुणिना तेन मणीस्तृणमिवोज्ज्वला ।
खण्डेन्दुमण्डनार्चायां मण्डनत्वमखण्डितं ॥२८०॥
राज्ञस्तस्यैव राजश्रीः परलोकानुगाभवत् ।
यस्तामयोजयद्भुक्तो धर्मेणाव्यभिचारिणा ॥२८१॥
षष्टिमब्दान् प्रशास्योर्वीमासन्नानुचरान्वितः ।
आरुरोह सदेहोऽसौ लोकान् शशिशिखामणेः ॥२८२॥
भृत्या नरं समाश्रित्य प्रययुः शोचनीयतां ।
तत् सुतं तु समालम्ब्य प्रभुं भुवनवन्द्यतां ॥२८३॥
यात्याश्रितः किल समाश्रयणीयलभ्यां निन्द्यां
गतिं जगति सर्वजनार्चितां वा ।
गच्छत्यधस्तृणगुणाः श्रितकूपयन्त्रः
पुष्पाश्रयी सुरशिरो भुवि यूथिमेति ॥२८४॥
सिद्धः सिद्धः सदेहोऽयमिति शब्दं सुरा दिवि ।
प्रोद्घोषयन्तो व्यनयन् पटहं सप्त वासरान् ॥२८५॥
उत्पलाक्ष इति ख्यातिं पेशलाक्षतया गतः ।

तत्सूनुस्त्रिंशतं सार्द्धान् वर्षाणामन्वशान्महीं ॥२८६॥
तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं पुरं व्यधात् ।
क्ष्मां सप्तत्रिंशतं वर्षान् सप्त मासांश्च भुक्तवान् ॥२८७॥
हिरण्यकुल इत्यस्य हिरण्याक्षस्य चात्मजः ।
षष्टिं षष्टिं च मुकुलस्तत्सूनुरभवत् समाः ॥२८८॥
अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः ।
तस्यात्मजोऽभून्मिहिरकुलः कालोपमो नृपः ॥२८९॥
दक्षिणां सान्तकामाशां स्पर्द्धया जेतुमुद्यता ।
यन्मिषादुत्तरह्रिद्धभारान्यमिवान्तकं ॥२९०॥
सान्निध्यं यस्य सैन्यान्तर्हन्यमानाशनोत्सुकान् ।
अजानन् गृध्रकाकादीन् दृष्ट्वाग्रे धावतो जनाः ॥२९१॥
दिवारात्रं कृतप्राणिसहस्रपरिवारितः ।
योऽभूद्भूपालवेतालो विलासभवनेष्वपि ॥२९२॥
बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवं ।
न बभूव नृशंसस्य यस्य घोराकृतेर्धृतः ॥२९३॥
स जातु देवीं संवीतसिंहलांशुककञ्चुकां ।
हेमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना ॥२९४॥
सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः ।
इति कञ्चुकिना पृष्टेनोक्तो यात्रामधात् ततः ॥२९५॥

तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसंगमः ।
यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः ॥२९६॥
स सिंहलेन्द्रेण समं संरम्भाद्दुदपाठयत् ।
चिरेण चरणास्पृष्टप्रियालोकनजां रुषं ॥२९७॥
दूरात् तत् सैन्यमालोक्य लङ्कासौधैर्निशाचराः ।
भूयोऽपि राघवोद्योगमाशंक्य प्रचकम्पिरे ॥२९८॥
स तत्रान्यं नृपं दत्वा तीव्रशक्तिरपाहरत् ।
पटं यमुषदेवाख्यं मार्तण्डप्रतिमाङ्कितं ॥२९९॥
व्यावृत्य चोलकर्णाटनाटादींश्च नरेश्वरान् ।
सिन्धुरानिव गन्धेभो गन्धेनैव व्यदारयत् ॥३००॥
तस्मिन् प्रयाते प्राप्तेभ्यः शशंसुस्तत्पराभवं ।
नगर्यो नरनाथेभ्यस्त्रुट्यदट्टालमेखलाः ॥३०१॥
काश्मीरं द्वारमासाद्य श्वभ्रभ्रष्टस्य दन्तिनः ।
श्रुत्वा सत्रासजं घोषं तोषरोमाञ्चितोऽभवत् ॥३०२॥
तदाकर्णनसंरम्भे सद्धर्षोऽथ विरुद्धधीः ।
शतमन्यद्गजेन्द्राणां कूटेन निरलोठयत् ॥३०३॥
स्पर्शोऽङ्गानि यथा वाचं कीर्त्तनं पापिनां तथा ।
सन्दूषयेदतो नोक्ता तस्यान्यापि नृशंसता ॥३०४॥
को वेत्त्यद्भुतचेष्टानां कृत्यं प्राकृतचेतसां ।

धर्मं सुकृतसंप्राप्तिहेतोः सोऽपि यदाददे ॥३०५॥
श्रीनगर्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरं ।
होलाडायां समिहिरपुराख्यं पृथुपत्तनं ॥३०६॥
अग्रहारान् जगृहिरे गान्धारब्राह्मणास्ततः ।
समानशीलास्तस्यैव ध्रुवं तेऽपि द्विजाधमाः ॥३०७॥
भगिनीवर्गसंभोगनिर्लज्जाम्लेच्छवंशजाः ।
स्नुषासंगतिसक्ताश्च दारदाः सन्ति पापिनः ॥३०८॥
वस्तुभावैस्तथा भाद्य भार्याविक्रयकारिणः ।
परोपभोगितास्तेषां निर्लज्जास्ताहि योषितः ॥३०९॥
मेघागमः फणिभुजं प्रथितान्धकारः
प्रीणाति हंसममलो जलदात्ययश्च ।
प्रीतिः समानरुचितैव भवेन्नितान्तं हातुः
प्रतिग्रहकृतश्च परस्परस्य ॥३१०॥
स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः ।
भूरिरोगार्दितवपुः प्राविशज्ज्वातवेदसं ॥३११॥
सोऽयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः ।
देहत्यागेऽस्य गगणादुच्चचारेति भारती ॥३१२॥
इत्यूचुर्ये मते तेषां स एव परिहारदः ।
खण्डयन्वीतघृणतामग्रहारादिकर्मभिः ॥३१३॥

आक्रान्ते दरदैर्भौटैर्म्लेच्छैरशुचिकर्मभिः ।
विनष्टधर्मे देशेऽस्मिन् पुण्याचारप्रवर्त्तनं ॥३१४॥
आर्यदेशान् स संस्थाप्य व्यतनोद्दारुणं तपः ।
संकल्प्य स्ववपुर्दाहं प्रायश्चित्तक्रियां व्यधात् ॥३१५॥
अत एवाग्रहाराणां सहस्रं प्रत्यपादयत् ।
गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे ॥३१६॥
क्षुरखड्गासिधन्वादिपूर्णे यः फलके तदा ।
वह्निप्रदीप्ते सहसा पर्यन्ते स्वां तनुं जहौ ॥३१७॥
इत्येतस्मिन् जनाम्नाये केचिद्व्यभिचारिणि ।
प्राहुः पुरुषसिंहस्य क्रौर्यं तस्याविगर्हितं ॥३१८॥ कुलकं॥
ये नागेन रुषा प्लुष्टे नगरे प्राभवन् खशाः ।
तेषां नाशाय वृत्तान्तं पूर्वोक्तं जगदुः परे ॥३१९॥
अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीं ।
अशक्योन्मूलना मध्ये शिलाभूद्विघ्नकारिणी ॥३२०॥
ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः ।
यक्षः शिलायां बलवान् ब्रह्मचार्यत्र तिष्ठति ॥३२१॥
साध्वी स्पृशति चेदेनां निरोद्धुं न च शक्नुयात् ।
ततोऽपरेद्युः स्वप्नोक्तं शिलायां तेन कारितं ॥३२२॥
तासु तासु कुलस्त्रीषु व्यर्थयत्नास्वथाचलत् ।

अथ ग्राहयितुं भूपानाज्ञां हिंसानिवृत्तये ।
स दिग्जयाय निर्व्याजधर्माचर्यो विनिर्ययौ ॥२७॥
अभूद्भीतजनतावेक्षणाश्लाघ्यविक्रमः ।
स्पृहणीयो जनस्यापि त्वदीयविजयोद्यमः ॥२८॥
प्रभावविजितान् कृत्वा सोऽहिंसादीक्षितान् नृपान् ।
अर्णसां पत्युरभ्यर्णमवापावर्णवर्जितः ॥२९॥
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः ।
युक्तिं द्वीपान्तराक्रान्त्यै क्षणमन्तर्व्यचिन्तयत् ॥३०॥
अथ वेलावनोपान्ते तेनार्त्ताक्रन्दितध्वनिः ।
मेघवाहनराज्येऽपि हतोऽयमिति शुश्रुवे ॥३१॥
तप्तायःशंकुनेवान्तर्व्रणितः स द्रुतं ततः ।
संचारिणातपत्रेण स तत्र वसुधामगात् ॥३२॥
अपश्यदथ केनापि चण्डिकायतनाग्रतः ।
नरं शवरसेनान्या हन्यमानमधोमुखं ॥३३॥
अनात्मज्ञ धिगेतत् ते कुकर्मेति महीभुजा ।
तर्जितः स भयादेव शवरस्तं व्यजिज्ञपत् ॥३४॥
शिशुर्मुमूर्षुर्मे राजन्नयं रोगार्दितः सुतः ।
कर्मैतद्दैवतैरुक्तमस्य श्रेयोलवावहं ॥३५॥
उपहारनिरोधेन सद्य एष विपद्यते ।

बन्धुवर्गमशेषं च विज्ञोतज्जीवजीवितं ॥३६॥
अरण्यगहनाल्लब्धमनाथं देव रक्षसि ।
बहुलोकाश्रयं बालं कथमेतमुपेक्षसे ॥३७॥
अथाभ्यधान्महात्मा स वचोभिः शवरस्य तैः ।
बध्यस्य दृष्टिपातैश्च विक्लवैर्विवशीकृतः ॥३८॥
किरात कातरो मा भूः स्वयं संरक्ष्यते मया ।
बहुबन्धुस्तव सुतो बध्योऽप्ययमबान्धवः ॥३९॥
उपहारीकरोम्येष चण्डिकायै स्वविग्रहं ।
मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयं ॥४०॥
तदद्भुतमहासत्त्वचित्तोदात्तत्वविस्मितः ।
उन्मिषद्रोमहर्षस्तं ततः स शवरोऽभ्यधात् ॥४१॥
अतिकारुण्यमिषतस्तवायं पृथिवीपते ।
कश्चिन्मतिविपर्यासप्रकारो हृदि रोहति ॥४२॥
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तं ।
पृथिवीभोगसुभगं कथं कायमुपेक्षसे ॥४३॥
न मानं न यशो नार्थान् न दारान् न च बान्धवान् ।
न धर्मं न सुतान् भूपा रक्षन्ति प्राणतृष्णया ॥४४॥
तत् प्रसीद प्रजानाथ मा बध्येऽस्मिन् कृपां कृथाः ।
शिशुश्चैष प्रजाश्चैता जीवन्तु त्वयि जीवति ॥४५॥

उपाजिहीर्षुरात्मानं दत्तद्योतार्घडम्बरैः ।
अर्चयन्निव चामुण्डामथोवाच स पार्थिवः ॥४६॥
सदाचारसुधास्वादे के भवन्तो वनौकसः ।
जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ॥४७॥
ध्रुवापायेन कायेन क्रीणतः कीर्त्तिमव्ययां ।
ममाभीष्टं प्रमार्ष्टुं ते मूढ रूढोऽयमाग्रहः ॥४८॥
मा वोचः किञ्चिदपरं प्रहर्त्तुं चेद्घृणा तव ।
न किं निजकृपाणो मे शक्तः प्रहारसिद्धये ॥४९॥
इत्युक्त्वा स स्वयं देहमुपहर्त्तुं समुद्यतः ।
खण्डनाय स्वमुण्डस्य विकोषं शस्त्रमाददे ॥५०॥
ततः प्रहर्तुकामस्य तस्य द्युकुसुमैः शिरः ।
करश्च दिव्यवपुषा रुद्धः केनाप्यजायत ॥५१॥
अथापश्यत् तथा भूतः कञ्चिद्दिव्याकृतिं पुरः ।
न चण्डिकां न तं बध्यं न किरातं न दारकं ॥५२॥
स तं दिव्यस्तदावादीन्मां त्वं सत्त्ववशीकृतं ।
विद्धि मध्यमलोकेन्दो वरुणां करुणानिधे ॥५३॥
यदेतत् त्वामुपास्तेऽद्य हर्म्यं तन्मत्पुरात् पुरा ।
महाबलोऽहरद्भीमः फुराणः स्वसुरस्तव ॥५४॥
रसातलैकतिलकं माहात्म्यवदिदं विना ।

उपद्रवाः प्राणहराः पौराणां नः पदे पदे ॥५५॥
तदिदं प्राप्तुकामेन त्वदौदार्यं परीक्षितं ।
करुणामय मायेयं निरमायि मयेदृशी ॥५६॥
त्वदार्द्रिया व्यधाज्जन्तून् व्यसून् वसुकुलात्मजः ।
प्रायश्चित्तममारेण चरसीव तदेनसः ॥५७॥
भयस्पृहाजनकयोर्धरणीधरणोचिते ।
शेषदेहे विषोद्गारफणारत्नौघयोरिव ॥५८॥
तमःप्रकाशावहयोस्तेजः क्रान्तदिगन्तरे ।
उषर्बुधे धूमजालज्वालापल्लवयोरिव ॥५९॥
क्षमाप्यायक्रियाभाजोः रूढतेजस्विमण्डले ।
प्रावृट्पयोदहन्नेऽह्नि सन्तापासारयोरिव ॥६०॥
द्वयोरालोकितं चित्रं जन्मैकस्मिन् महाकुले ।
तस्य त्रिकोटिहन्तुश्च तवाहिंसस्य च प्रभोः ॥६१॥ चतुर्भिः कुलकं ॥
नम्रः सम्राडथैवं स वदतो यादसां प्रभोः ।
चकार पूजां स्तोत्रेण छत्रेण च कृताञ्जलिः ॥६२॥
तं च संप्रति गृह्णन्तं प्रणयाडुष्णावारणं ।
जगाद गुणिनामग्र्यो वरुणं धरणीधरः ॥६३॥
कल्पद्रुमाश्च सन्तश्च नार्हन्ति समशीर्षिकां ।
अर्थिनां प्रार्थिताः पूर्वे फलन्त्यन्ये स्वयं यतः ॥६४॥

अवालम्बिष्यतच्छत्रं कथं न पुण्यपुण्यता ।
तत्प्रार्थयिष्यत न चेदार्त्तोपकृतये भवान् ॥६५॥
वदान्यः संविभागेभ्यः पूर्णां कुर्यादनुग्रहं ।
छायया प्याययन् दद्यात् फलान्यपि महीरुहः ॥६६॥
तदेवं विहितोदात्तसंविभागाभिचोदितः ।
जनोऽयं भगवन् किञ्चिद्वरं प्रार्थयते परं ॥६७॥
वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात् ।
जेतुं द्वीपान् कथ्यतां तु युक्तिः पाथोधिलङ्घने ॥६८॥
इत्यर्थ्यमानोऽकथयत् भूमिपालं जलेश्वरः ।
तितीर्षो भवति स्तम्भं नीयतेऽम्भो मयाम्बुधेः ॥६९॥
ततो महान् प्रसादोऽयमित्युक्ते पृथिवीभुजा ।
तिरोबभूव भगवान् वरुणः सोष्णवारणः ॥७०॥
अन्येद्युर्विस्मयस्मेरैर्बलैः सीमन्तयन् जलं ।
प्रभावस्तम्भितजलं प्रोत्ततार स वारिधिं ॥७१॥
गुणरत्नाकरः शैलं सरत्नाकरशेखरं ।
नानारत्नाकरं सैन्यैरारुरोहाथ रोहणां ॥७२॥
तत्र तालीतरुवनच्छायाध्यासितसैनिकं ।
प्रीत्या लङ्काधिराजस्तमुपतस्थे विभीषणः ॥७३॥
समागमः स शुशुभे नरराक्षसराजयोः ।

वन्दिनादाश्रुतान्योन्यप्रथमालापसंभ्रमः ॥७४॥
अथ रक्षःपतिर्लङ्कां नीत्वालङ्करणं क्षितेः।
अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत् ॥७५॥
यदासीत् पिशिताशा इत्यन्वर्थं नाम रक्षसां।
तदा तदाज्ञाग्रहणे प्रापि तद्रूढिशब्दतां ॥७६॥
रक्षःशिरःप्रतिच्छन्दैः स्थिरप्रणतिसूचकैः।
सनाथशिखरान् प्रादात् तस्मै रक्षःपतिर्ध्वजान् ॥७७॥
पाराद्वारिनिधेः प्राप्ताः काश्मीरेष्वधुनापि ये।
राज्ञां यात्रासु निर्यान्ति ख्याताः पारध्वजाः पुरः ॥७८॥
इत्थमाराक्षसकुलं प्राणिहिंसां निषिध्य सः।
स्वमण्डलं प्रति कृती न्यवर्तत नराधिपः ॥७९॥
ततः प्रभृति तस्याज्ञा सार्वभौमस्य भूपतेः।
हिंसाविरतिरूपा सा न कैश्चिदुदलंघ्यत ॥८०॥
क्षुद्रैरुधादिभिर्नाप्सु सिंहाद्यैर्गहने न च।
न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः ॥८१॥
अतिक्रामति कालेऽथ कोऽपि शोकाकुलो द्विजः।
पुत्रं गतासुमादाय द्वारि चक्रन्द भूपतेः ॥८२॥
दुर्गया प्रार्थितं राजन्नुपहारं विनेष मे।
अनन्यसन्ततेः सूनुर्व्वरेण्यो विपद्यते ॥८३॥

यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि ।
एतद्विपत्तौ तत्कोऽन्यो निमित्तं प्रतिभाति मे ॥८४॥
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयतां ।
ब्राह्मणस्य पशोर्वा स्यात् प्राणानां कियदन्तरं ॥८५॥
तपस्यतामपि ये जघ्नुर्ब्राह्मणप्राणलब्धये ।
हा मातस्तेऽधुना भूमे प्रजापालास्तिरोहिताः ॥८६॥
इति ब्रुवति साक्षेपं शोकरुक्षाक्षरं द्विजे ।
आपन्नार्त्तिहरो राजा चिरमेवं व्यचिन्तयत् ॥८७॥
न बध्याः प्राणिन इति प्रागेयोऽस्मि समकल्पयं ।
विप्रार्थमपि किं कुर्यां स प्रतिज्ञातविप्लवं ॥८८॥
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि ।
तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः ॥८९॥
नेति मे संशयभ्रान्तमेकपक्षावलम्बनं ।
संभेदावर्त्तपतितं प्रसूनमिव मानसं ॥९०॥
तत् स्वदेहोपहारेण दुर्गां तोषयता मया ।
प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः ॥९१॥
इति संचिन्त्य सुचिरं देहदानोद्यतो नृपः ।
श्वः प्रियं तव कर्तास्मीत्युक्त्वा विप्रं व्यसर्जयत् ॥९२॥
क्षपायां क्ष्मापतिमथ समुपाहर्तमुद्यतं ।

निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मजं ॥९३॥
इत्याद्यद्यतनस्यापि चरितं तस्य भूपतेः ।
पृथग्जनेषु संभाव्यं वर्णयित्तुस्त्रपामहे ॥९४॥
अथवा रचनानिर्विशेषमार्गेण वर्त्मना ।
प्रस्थिता नानुरुन्धन्ति श्रोतृचित्तानुवर्त्तनं ॥९५॥
तस्मिन्नस्तं गते भुक्ता क्ष्मां चतुस्त्रिंशतं समाः ।
अनादित्यमिवाशेषं निरालोकमभूज्जगत् ॥९६॥
अथ क्ष्माभृद्गरत्न क्ष्मां श्रेष्ठसेनस्तदात्मजः ।
प्राहुः प्रवरसेनं यं तुञ्जीनं चाञ्जसा जनाः ॥९७॥
दोस्तम्भसंभृतासक्तौ कृपाणमणिदर्पणे ।
संक्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत ॥९८॥
समातृचक्रं निर्माय यः पूर्वं प्रवरेश्वरं ।
पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात् ॥९९॥
गृहाङ्गनमिव क्षोणीं गणयन् वशवर्त्तिनीं ।
त्रिगर्तोर्वीं ग्रामसख्ये प्रवरेशाय यो ददौ ॥१००॥
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनां ।
स समास्त्रिंशतं भूभृदनिस्त्रिंशाशयोऽभवत् ॥१०१॥
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ ।
साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः ॥१०२॥

वालाकृतानां प्राचुर्यं विनिवार्य समञ्जसं ।
तोरमाणेन दीन्नाराः स्वाकृताः संप्रवर्तिताः ॥१०३॥
मामवज्ञाय राज्ञेव कस्मादेतेन वल्गितं ।
इति तं पूर्वजो राजा क्रोधनो बन्धने व्यधात् ॥१०४॥
चिरं स्थितित्यक्तशुचस्तत्र तस्याञ्जनाभिधा ।
ऐन्द्वाकस्यात्मजा राज्ञी वङ्गेन्द्रस्यास्त गुर्विणी ॥१०५॥
आसन्नप्रसवा भर्त्रा सत्रपं तेन वोधिता ।
सुतं प्रविश्य प्रासोष्ट कुलालनिलये क्वचित् ॥१०६॥
स कुम्भकारगेहिन्या काकोव पिकशावकः ।
पुत्रीकृतो राजपुत्रः पर्याप्तं पर्यवर्द्धत ॥१०७॥
जनयित्र्या कुलाल्याश्च रक्षित्र्या विदितोऽभवत् ।
रत्नसूतेर्भुजंग्याश्च प्रच्छन्न इव सेवधिः ॥१०८॥
पौत्रः प्रवरसेनस्य गिरा मातुर्नृपात्मजः ।
पैतामहेन नाम्नैव कुलाल्या ख्यापितोऽभवत् ॥१०९॥
वर्द्धमानः स संपर्कं न सेहे सहवासिनां ।
तेजस्विमैत्री रसिकः शिशुः पद्म इवाम्भसां ॥११०॥
तं कुलीनैश्च शूरैश्च विद्याविद्भिश्च दारकैः ।
अन्वीतमेव ददृशुः क्रीडन्तं विस्मयाज्जनाः ॥१११॥
स्ववृन्दस्यात्मुदारोजा राजा चक्रे स दारकैः ।

मृगेन्द्रशावः क्रीडद्भिर्वने बालमृगैरिव ॥११२॥
संविभेजेऽनुजग्राह वशीचक्रे च सोऽर्भकान् ।
अज्ञानोचितमाचारं नैव किञ्चिदसेवत ॥११३॥
भाण्डादि कर्तुं मृत्पिण्डं कुम्भकारैः समर्पितं ।
स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरम्पराः ॥११४॥
तथा साश्चर्यचर्यः स क्रीडन् जातु व्यलोक्यत ।
मातुलेन जयेन्द्रेण सादरं चाभ्यनन्द्यत ॥११५॥
आवेद्यमानं शिशुभिस्तं जयेन्द्रोऽयमित्यसौ ।
भूपालवत् सावहेलं पश्यन्नन्वग्रहीदिव ॥११६॥
संभाव्य सत्त्वावष्टम्भात् तमसामान्यवंशजं ।
सादृश्याद्भगिनीभर्तुर्भागिनेयमशङ्कत ॥११७॥
सवरस्तर्कजिज्ञासारसेनानुससार तं ।
प्राप्तस्तद्गृहमौत्सुक्यात् स्वसारं च व्यलोकयत् ॥११८॥
सा स चान्योन्यमुन्मन्यू पश्यन्तौ भ्रातरौ चिरात् ।
निःश्वासात् द्विगुणोष्माणि मुमुचतुरश्रूण्यमुञ्चतां ॥११९॥
कुलाल्यादारको मातः कावेताविति पृष्टवान् ।
अकथ्यतेत्थं वत्सैषा माताऽयं मातुलश्च ते ॥१२०॥
पितुर्बन्धेन सक्रोधं तं कालापेक्षया क्षमं ।
शिक्षयित्वा जयेन्द्रोऽथ कार्यशेषाय निर्ययौ ॥१२१॥

उत्पित्सोत्पादनासक्ते तस्मिन् भ्रात्रा यदृच्छया ।
बन्धान्मुक्तो नृतरणिस्तोरमाणोऽस्तमाययौ ॥१२२॥
निवार्य मरणोद्योगं मातुर्निर्वेदखेदितः ।
ययौ प्रवरसेनोऽथ तीर्थौत्सुक्याद्दिगन्तरं ॥१२३॥
रक्षित्वा दशमासोनाः क्ष्मामेकत्रिंशतं समाः ।
तस्मिन् क्षणे हिरण्योऽपि शान्तिं निःसन्ततिर्ययौ ॥१२४॥
तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षापराभिधः ।
एकच्छत्रश्चक्रवर्त्ती विक्रमादित्य इत्यभूत् ॥१२५॥
भूपमद्भुतसौभाग्यं श्रीर्बद्धरभसाऽभजत् ।
विहाय हरिबाहूंश्च चतुरस्सागरांश्च यं ॥१२६॥
लक्ष्मीं कृत्वोपकरणं गुणो येन प्रवर्द्धते ।
श्रीमत्सु गुणिनोऽद्यापि तिष्ठन्त्युद्धतकन्धराः ॥१२७॥
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः ।
शकान् विनाश्य येनादौ कार्यभारो लघुः कृतः ॥१२८॥
नानादिगन्तराख्यातं गुणावत्सुलभं नृपं ।
तं कविर्मातृगुप्ताख्यः सभास्थानस्थमासदत् ॥१२९॥
स गम्भीरस्य भूभर्तुरनुभावं गुणाद्भुतं ।
विविधास्थानसंवृद्धस्तस्याभ्यूह्य व्यचिन्तयत् ॥१३०॥
सोऽयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः ।

परभागोपलम्भाय पूर्वेऽमुष्य महीभुजः ॥१३१॥
अस्मिन् राजनि तद्वृत्तैः सूरिभिः संभृतश्रुतैः ।
नाञ्जलिर्दीयते जातु मानाय च गुणाय च ॥१३२॥
भंग्यामुष्मिन् विदधती स्वाभिप्रायप्रकाशनं ।
वैदग्ध्यबन्ध्यतां नैति बुद्धिः कुलवधूरिव ॥१३३॥
खिलीकृतखलालापे युक्तायुक्तविवेकिनि ।
नायाति सेव्यमानेऽस्मिन् स्वगुणोऽनर्थकारितां ॥१३४॥
अनाप्नुवद्भिः सद्विद्यैर्दुर्विद्यसमशीर्षिकां ।
जीवन्मरणमस्याग्रे गुणिभिर्नानुभूयते ॥१३५॥
संभावनानुसारेण प्रवृत्तोऽस्माद्विवेकिनः ।
शोच्यते नाश्रितोच्छ्वासं प्रीतिदायो महाशयैः ॥॥१३६॥
गृह्णन् यथा गुणं स्वल्पमुचितप्रतिपत्तिभिः ।
अन्तरज्ञः समस्तानामयमुत्साहवर्द्धनः ॥१३७॥
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादनश्रमः ।
अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रियः ॥१३८॥
मिथ्याख्यानगुणो नाप्तो नामात्यः कलहप्रियः ।
असत्यसन्धः स्थेयो वा नास्थानेऽस्य महीपतेः ॥१३९॥
अश्लीलालापिनोऽन्योन्यं नर्मोक्त्या मर्मभेदिनः ।
अन्यप्रवेशासहना संहता नास्य सेवकाः ॥१४०॥

छन्दानुवर्तिनामेष निजविज्ञानवन्दिनां ।
सर्वज्ञंमन्यतान्धानां मुखप्रेक्षी न पार्थिवः ॥१४१॥
अनेन सह संजातः संलापो विपुलोदयः ।
लभ्यते नान्तराच्छेत्तुं दुर्जनैर्जातु दुर्जनैः ॥१४२॥
सर्वदोषोज्झितं सेव्यं नृपमेवमिमं मम ।
समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः ॥१४३॥
गम्भीरश्च गुणज्ञश्च स्थिरबुद्धिश्च पार्थिवः ।
एष क्लेशभयं त्यक्त्वा निषेव्यः प्रतिभाति मे ॥१४४॥
न चास्माद्धनमादाय रञ्जितादन्यराजवत् ।
भ्राम्यतो भूतलेऽमुष्मिन् सेव्योऽन्यः प्रतिभाति मे ॥१४५॥
इति संचिन्त्य सुदृढं स नवामिव तां सभां ।
नारुरुक्षन्न चास्ते स्म गुणिगोष्ठीषु मध्यगः ॥१४६॥
मृदुपूर्वं गुणानेव दर्शयन्तं विशाम्पतिः ।
विशिष्टयोग्यताज्ञस्यै विवेदाराधनोन्मुखं ॥१४७॥
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः ।
उदात्तं सत्क्रियार्हत्वं वदत्यस्य गभीरता ॥१४८॥
इति सञ्चिन्त्य राज्ञापि ज्ञातुं तस्यान्तरं मतेः ।
नाक्रियन्त परीक्षार्थं यथावल्लाभसत्क्रियाः ॥१४९॥
स तेनानुपचारेण तमुदात्ताशयं नृपं ।

स्वीकर्त्तारं विदन् धीमान् सिषेवे प्रीतिमाश्रितः ॥१५०॥
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः ।
तस्य नोद्वेगमगमत् स्वकाय इव पार्थिवः ॥१५१॥
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया ।
शरन्निशाक्षणेनेव राजा निन्ये प्रसन्नतां ॥१५२॥
नर्मभिर्गर्भचेटानां द्वाःस्थानां विक्रियाक्रमैः ।
मिथ्यास्तवैर्विटानां च न स क्षोभमनीयत ॥१५३॥
प्रसन्नालापसंप्राप्तौ छायाग्रह इवाचलः ।
प्रतिस्पर्द्धिवि च क्रुध्यान् नावज्ञायामभूत् प्रभोः ॥१५४॥
वीक्षणं राजदासीनां राजद्विष्टैस्सहासनं ।
राजाग्रे च कथां नीचैः कालविन्नाचचार सः ॥१५५॥
स्वभावाद्राजपुरुषैः सजनैराजनिन्दकैः ।
नास्मात् प्रभोरुपालम्भो लेभे पैशुन्यजीविभिः ॥१५६॥
वदद्भिरादरात् स्थैर्ये वैफल्याद्यन्वहं प्रभोः ।
निन्ये नोत्साहशैथिल्यं सेवोत्साहासहिष्णुभिः ॥१५७॥
अन्योत्कर्षानपि वदन् प्रसङ्गेन निराग्रहः ।
स्वविद्याद्योतकस्सोऽभूत् सभ्यानां हृदयंगमः ॥१५८॥
एवं स सेवमानस्तमुद्योगेन बलीयसा ।
अनिर्विण्णो मातृगुप्तः षडृतूनत्यवाहयत् ॥१५९॥

अथ तं कृशसर्वाङ्गं धूसरं जीर्णवाससं ।
वहिर्जातु विनिर्यातो राजा वीक्ष्य व्यचिन्तयत् ॥१६०॥
वैदेशिको निःशरणो गुणवान् बान्धवोज्झितः ।
दार्ढ्यं जिज्ञासुना कष्टं सोऽयमावासितो मया ॥१६१॥
कोऽस्याश्रयः किमशनं कानि प्रावरणानि वा ।
इत्यैश्वर्यविमूढेन मया हन्त न चिन्तितं ॥१६२॥
वसन्तेनेव न मया शोभयाप्यापि योजितः ।
शीतवातातपैः शुष्यन् सोऽयं पुरुषपादपः ॥१६३॥
अस्य ग्लानस्य भेषज्यं निर्विण्णस्य विनोदनं ।
श्रान्तस्य वा क्लमच्छेदं को विदध्यादसंपदः ॥१६४॥
नास्मै चिन्तामणिं दद्यां नामृतं वा निषेवितः ।
मया यदयमेतावद्व्यामूढेन परीक्ष्यते ॥१६५॥
तदमुष्य गुणित्वस्य तीव्रं सेवाश्रमस्य च ।
प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयां ॥१६६॥
इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति ।
स्वप्रसादोचिता काचित् प्रत्यभान्नेव सत्क्रिया ॥१६७॥
ततः प्रावर्तत स्फारनीहारलववाहिभिः ।
दहन्निवाङ्गं प्रालेयपवमानैर्हिमागमः ॥१६८॥
सन्ततध्वान्तमिषतस्तीव्रशीतवशीकृताः ।

आशाम्बकाशिरे नीलनिचोलाच्छादिता इव ॥१६९॥
शीतार्त्या द्युमणावोर्वदहनोष्माभिलाषतः ।
द्रुतं यातीव जलधिं दिनानि लघुतां ययुः ॥१७०॥
अथ दीपोज्ज्वले धाम्नि लसद्दीप्तिकसन्निके ।
कदाचिन्नृपतिर्दैवादर्द्धरात्रे व्यबुध्यत ॥१७१॥
स हेमन्तानिलैर्भूरिझांकारपरुषैः पुरः ।
दीपान् प्रकम्पितानीषत्प्रविष्टैर्धाम्नि दृष्टवान् ॥१७२॥
तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात् ततः ।
यामिकेषु वह्निस्सञ्ज्ञः को वर्तत इति स्फुटं ॥१७३॥
सुखसुप्तेषु सर्वेषु वाह्यकक्षान्तरात् ततः ।
राजन्नयमहं मातृगुप्त इत्यशृणोद्वचः ॥१७४॥
प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहं ।
लक्ष्मीसान्निध्यरम्यं तददृष्टोऽन्यैर्विवेश सः ॥१७५॥
दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः ।
वह्निर्ययौ स ऊचेऽथ क्षणं तिष्ठेति भूभुजा ॥१७६॥
सभयद्विगुणीभूतशीतकम्पः प्रभोः पुरः ।
किंस्विद्वक्तीति विमृषन् नातिदूरेऽभ्युपाविशत् ॥१७७॥
अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तं ।
सोऽभ्यधाद्देव यामिन्यायामः साधोऽवशिष्यते ॥१७८॥

ततो भूभृद्बभाषेनं कथं सम्यङ्निशाक्षणाः ।
त्वयावधारिता निद्रा कथं नाभूच्च ते निशि ॥१७९॥
अथ कृत्वा क्षणाच्छ्लोकमेतं तं संव्यजिज्ञपत् ।
अवस्थावेदनादाशां दैन्यं वा त्यक्तुमुद्यतः ॥१८०॥
शीतेनोद्धूषितस्य माषमशिवं चिन्तार्णवे मज्जतः
शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता सन्त्यज्य दूरं गता
सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥१८१॥
तदाकर्ण्य महीपालः साधुवादैः परिश्रमं ।
अभिनन्द्य कवीन्द्रं तं पूर्वस्थाने व्यसर्जयत् ॥१८२॥
अचिन्तयच्च धिङ्मां यः स्वगुणात् खिन्नचेतसः ।
दुःखोत्तप्तं वचः शृण्वन्नेवमेवाधुना स्थितः ॥१८३॥
निरर्थकान् साधुवादाननन्यस्येव विदन् मम ।
अयमज्ञातहृदयो दुःखमास्ते ध्रुवं बहिः ॥१८४॥
चिरं चिन्तयतो यत्नात् सदृशीमस्य सत्क्रियां ।
देयं महार्हमद्यापि न किञ्चित् प्रतिभाति मे ॥१८५॥
अथवास्यैव सूक्तेन स्मारितोऽस्म्यधुना यथा ।
वर्तते मज्जरक्षितं काम्यं काश्मीरमण्डलं ॥१८६॥
पात्रायास्मै मही तस्मात् सा मया प्रतिपाद्यते ।

अवधीर्य महीपालान् महतोऽप्यर्थानपरान् ॥१८७॥
इति निश्चित्य चतुरं तपायामेव पार्थिवः ।
गूढं व्यसर्जयद्दूतान् काश्मीरीः प्रकृतीः प्रति ॥१८८॥
आदिदेश च तान् यो वा दर्शयिष्यति शासनं मम ।
मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यतां ॥१८९॥
अथ दूतेषु यातेषु लेखयित्वा स्वशासनं ।
क्ष्मापतिस्तं तपाशेषं कृतकृत्योऽन्यवाहयत् ॥१९०॥
मातृगुप्तस्तु नृपतेः संलापमपि निष्फलं ।
ध्यायन् गृहीतनैराश्यस्त्यक्तभार इवाभवत् ॥१९१॥
अन्तर्दध्यौ च कर्तव्यं कृतं शान्तोऽद्य संशयः ।
आशापिशाचिकात्यक्ता मयि स्थास्यत्यधुना सुखं ॥१९२॥
गतानुगतिकत्वेन कोऽयमासीन्मम श्रमः ।
जनप्रवादात् सेव्यत्वं येनास्य ज्ञातवानहं ॥१९३॥
भुञ्जानाः पवनं सरीसृपगणाः प्रख्यापिता भोगिनो
गायद्भृङ्गनिवारकाणि गदिता विस्तीर्णकर्णा गजाः ।
यश्चाभ्यन्तरसंभृताग्निविकृतिः प्रोक्तः शमी स द्रुमो
लोकेनेति निरर्गलं प्रलपता सर्वं विपर्यासितं ॥१९४॥
अथवा विद्यतेऽमुष्य न काप्यनभिगम्यता ।
लक्ष्मीप्रणयिनो येन कृताःप्रणयिनां गृहाः ॥१९५॥

त्यागिनो निष्कलङ्कस्य को दोषोऽस्य महीपतेः ।
ममापुण्यं तु तन्निन्द्यं यच्छ्रेयःप्रतिबन्धकं ॥१९६॥
रत्नोज्ज्वलाः प्रविकिरल्लहरीस्समीरैरब्धिः
क्रियेत यदि रुद्धतटाभिमुख्यः ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां
दातुर्मनागपि न तस्य तु दत्तृतायाः ॥१९७॥
उत्तानफललुब्धानां वरं राजोपजीविनः ।
न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये ॥१९८॥
तिष्ठन्ति ये पशुपतेः किल पादमूले संप्राप्यते
झटिति तैर्नहि भस्मनोऽन्यत् ।
ये तद्वृषस्य तु समुज्ज्वलजातरूपप्राप्त्या न
कानि सुदिनानि सदैव तेषां ॥१९९॥
चिन्तयन्नपि पश्यामि न किञ्चिद्दोषमात्मनः ।
यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः ॥२००॥
अथवा नादृतोऽन्येन संप्राप्तोऽन्तिकमाप्नुयात् ।
कः फलेनाभिसंबन्धं गतानुगतिकात् प्रभोः ॥२०१॥
अन्तर्ये सततं लुठन्ति गणितास्तानेव
पाथोधरैरात्तानापतितांस्तरङ्गवलयैरालिंग्य गृह्णन्नसौ ।
व्यक्तं मौक्तिकरत्नतां जलकणान् संप्रापयत्यम्बुधिः

प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते स्वामिभिः ॥२०२॥
इदं संचिन्तयन् सोऽभूत् सेव्ये तस्मिन् निरादरः ।
खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी ॥२०३॥
प्रभातायां विभावर्यामथास्थानस्थितो नृपः ।
आकार्यतां मातृगुप्त इति वक्तारमादिशत् ॥२०४॥
ततः प्रधावितानेकप्रतीहारप्रवेशितः ।
प्रविवेश महीभर्तुस्त्यक्ताश इव सोऽन्तिकं ॥२०५॥
तस्मै कृतप्रणामाय मुहूर्तादेव पार्थिवः ।
भ्रूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा ॥२०६॥
स्वयं च तमुवाचाङ्ग कश्मीरान् वेत्ति किं भवान् ।
गत्वा तत्राधिकारिभ्य इतच्छासनमर्प्यतां ॥२०७॥
स शापितोऽस्मद्देहेन यो लेखं वाचयेत् पथि ।
संविदेषा प्रयत्नेन विस्मर्तव्या न जातुचित् ॥२०८॥
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशंकितः ।
सोऽबुद्ध दहनज्वालां न तु रत्नाङ्कुरद्युतिं ॥२०९॥
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते ।
निर्गर्वैः पूर्ववद्राजा तस्थावाप्तैः सहालपन् ॥२१०॥
अथाक्लेशोचितं क्षाममपाथेयमबान्धवं ।
दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः ॥२११॥

अहो नरेश्वरस्येयं यत्किञ्चन विधायिता ।
पृथग्जनोचिते कर्मण्यर्हतोनिदधाति यः ॥२१२॥
दुराशया धृतक्लेशं सेवमानमहर्निशं ।
ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः ॥२१३॥
उपायं तं पुरस्कृत्य सेवते सेवकः प्रभुं ।
अनन्तरज्ञस्तत्रैव योग्यं तं किल मन्यते ॥२१४॥
सुखार्थी भोगारिप्रतिभयशमात् प्रत्युत सुखं
जहौ शेषस्तल्पीकृततनुनिषेव्यासुररिपुं ।
यतस्तेनामुष्मिन्नधिगतबला क्लेशसहतां
अमादायि न्यस्तं निरवधि धराभारवहनं ॥२१५॥
अयमेतद्गृहीतेषु गुणवत्सु गुणाधिकः ।
आत्मानं गुणवान् पश्यन्नास्ययेनमशिश्रियत् ॥२१६॥
अनन्तरज्ञः कोऽन्योऽस्माद्गुणान् दर्शयतेऽधिकान् ।
अस्मै गुणवते पूजां यश्चकार किलेदृशीं ॥२१७॥
यो नानाद्युतिमत्पदार्थरसिकोऽसारेऽपि शक्रायुधे
सप्रेमा स विलोक्य बर्हमिह मे किं किं न कुर्यात् प्रियं ।
इत्याविष्कृतबर्हराजि नटते यो बर्हिणोऽम्भोलवान्
नान्यन्मुञ्चति तं विहाय जलदं कोऽन्योऽस्ति शून्याशयः ॥२१८॥
गच्छतो मानृगुमस्य विर्दैन्यस्येव वर्त्मसु ।

नाभूद्भाव्यर्थमाहात्म्याद्विकल्पः कोऽपि चेतसि ॥२१९॥
अहंपूर्विकयोच्चद्भिर्निमित्तैः शुभशंसिभिः ।
स वितीर्णकरालम्भ इव न श्रममाददे ॥२२०॥
अपश्यल्स फणाकोटौ खञ्जरीटमहेः पथि ।
स्वप्ने प्रासादमारुह्य स्वं चोल्लंघितसागरं ॥२२१॥
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः ।
एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ॥२२२॥
फलं मम तनीयोऽपि काश्मीरेषु भवेद्यदि ।
अनर्घदेशमाहात्म्यात् किं किं नातिशयेत तत् ॥२२३॥
अकृच्छ्रलंघ्याः पन्थानो वल्लभातिथयो गृहाः ।
अपानमनु गच्छतोऽस्य सत्क्रियाश्च पदे पदे ॥२२४॥
इत्थं विलंघिताकाशं लोलानोकहशाद्वलं ।
मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलं ॥२२५॥
सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः ।
प्रत्युद्ययुस्तं मरुतः बाल्यायाः संस्तुता भुवः ॥२२६॥
क्रमवर्त्ताभिधाने स प्रदेशे प्राप्तवांस्ततः ।
ठक्कुं काम्बुवनामानं योऽत्र शूरपुरे स्थितः ॥२२७॥
नानाजनपदाकीर्णे स्थाने तत्राश शुश्रुवान् ।
काश्मीरकान् महामात्यान् स्थितान् केनापि हेतुना ॥२२८॥

ततोऽपनीतप्राग्वेशः प्रवृत्तो धवलांशुकैः ।
स जगामान्तिकं तेषां दातुं नृपतिशासनं ॥२२९॥
तं प्रयान्तं समुच्चद्भिः शकुनैः सूचितोदयं ।
पान्थाः केऽप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमे ॥२३०॥
श्रुत्वाथ विक्रमादित्यदूतः प्राप्त इति द्रुतं ।
द्वास्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन् ॥२३१॥
आगच्छत प्रविशतेत्युच्यमानोऽथ सर्वतः ।
स तान् समस्तसामन्तानाससादानिवारितः ॥२३२॥
यथा प्रधानं सचिवैर्विहितोचितसत्क्रियः ।
ततः परार्द्धमध्यास्त तन्निदर्शितमासनं ॥२३३॥
कृतार्ह्णैरथामात्यैराज्ञां पृष्टो महीभुजः ।
शनैस्तच्छासनं तेभ्यो लज्जमान इवार्पिपत् ॥२३४॥
तेऽभिवन्द्य प्रभोर्लेखमुपांशुमिलितास्ततः ।
उन्मुच्य वाचयित्वेतमवोचन् विनयान्विताः ॥२३५॥
मातृगुप्त इति श्लाघ्यं भवतामेव नाम किं ।
एवमेवैतदित्यूचे सोऽपि तान् विहितस्मितः ॥२३६॥
कः कोऽत्र सन्निधातॄणामित्यश्रूयत वाक् ततः ।
राज्याभिषेकसंभारो दृश्यते स च संभृतः ॥२३७॥
ततः कलकलोत्तालभूरिलोकसमाकुलः

प्रदेशः क्षणमात्रेण सोऽभूत् क्षुभ्यन्निवार्णवः ॥२३८॥
अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः ।
सन्निपत्य प्रकृतिभिर्मातृगुप्तोऽभ्यषिच्यत ॥२३९॥
तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठत् ।
सशब्दमभिषेकाम्बुरेवाम्रोत इवाबभौ ॥२४०॥
अथ स्नातानुलिप्ताङ्गसर्वाङ्गामुक्तभूषणं ।
व्यज्ञपयंस्तं राजानं क्रान्तराजासनं प्रजाः ॥२४१॥
अर्थितेन स्वयं त्रातुं विक्रमादित्यभूभुजा ।
निर्दिष्टः स्वसमानस्त्वं शाधि नः पृथिवीमिमं ॥२४२॥
मण्डलानि विलभ्यन्ते येर्न तेन प्रतिक्षणं ।
मा मंस्था मण्डलं राजन् विलब्धं तदिदं परैः ॥२४३॥
कर्मभिः स्वैरवाप्तस्य जन्मनः पितरो यथा ।
राज्ञा तथान्ये राज्यस्य प्रवृत्तावेव कारणं ॥२४४॥
इत्थं स्थिते परं कश्चित् त्वदीयोऽस्मीति शंसता ।
न नेया भवता राजन् वयमात्मा च लाघवं ॥२४५॥
इति तैस्तथ्यमुक्तोऽपि संस्मरन् स्वामिसत्क्रियां ।
मातृगुप्त महीपालः क्षणमासीत् कृतस्मितः ॥२४६॥
दानेन सुदिनं कुर्वन् नवराज्योर्जितेन सः ।
तत्रैव मङ्गलोदग्रं तदहोनिरवर्तयत् ॥२४७॥

पुरप्रवेशायान्येद्युरर्थ्यमानोऽथ मन्त्रिभिः ।
अद्भुतप्राभृतं दूतं राज्यदत्तुर्व्यसर्जयत् ॥२४८॥
देशौन्नत्यानुसारेण स्पर्द्धामिव च तां विदन् ।
स्वामिनो मनसि क्लीतः सागसं स्वममन्यत ॥२४९॥
अथाक्लयापरान् भृत्यान् वक्तुं सेवास्मृतिं प्रभोः ।
अल्पार्घाण्यपि खाद्यानि प्राहिणोत् प्राभृतानि सः ॥२५०॥
असामान्यान् गुणांस्तस्य स्मरन् पर्यश्रुलोचनः ।
स्वयं लिखित्वा श्लोकं च स्वकमेकं व्यसर्जयत् ॥२५१॥
नाकारमुद्वहसि नैव विकत्थसे त्वं दित्सां
न सूचयसि मुञ्चसि सत्फलानि ।
निःशब्दवर्षणमिवाम्बुधरस्य राजन्
संलक्ष्यते फलत एव तव प्रसादः ॥२५२॥
ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः ।
क्रमागतामिव मही यथावत् पर्यपालयत् ॥२५३॥
त्यागे वा पौरुषे वापि तस्यौचित्योन्नतात्मनः ।
क्ष्माभुजस्तर्कुकस्येव नाभूत् परिमितेच्छता ॥२५४॥
यष्टुं यज्ञान् कृतोद्योगस्त्यागी विततदक्षिणान् ।
पशुबन्धमनुध्याय करुणाकुञ्चितोऽभवत् ॥२५५॥
अमारमादिदेशाथ यावद्राज्यं स्वमण्डले ।

चूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकं ॥२५६॥
करम्भके क्रियमाणे मातृगुप्तेन भूभुजा ।
वैतृष्ण्यमुन्मिषत्तोषो न को नाम न्यसेवत ॥२५७॥
गुणी च दृष्टकष्टश्च वदान्यश्च स पार्थिवः ।
विक्रमादित्यतोऽप्यासीदभिगम्यः शुभार्थिनां ॥२५८॥
विशेषकतया तस्य श्लाघ्यया सुरभीकृताः ।
लक्ष्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु ॥२५९॥
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन् नवं ।
आसमाप्ति ततो नापत् साध्वसाध्विति वा वचः ॥२६०॥
अथ ग्रन्थयितुं तस्मिन् पुस्तकं प्रस्तुते न्यधात् ।
लावण्यनिर्याणभिया राजाधः स्वर्णभाजनं ॥२६१॥
अन्तरज्ञतया तस्य तादृश्याकृतसत्कृतेः ।
भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोऽर्पणं ॥२६२॥
स मातृगुप्तस्वाम्याख्यं निर्माय मधुसूदनं ।
कालेनादत्त पञ्चामानमस्यासुरसद्मने ॥२६३॥
इत्यासादितराज्यस्य शासतः क्ष्मां क्षमापतेः ।
त्रिमासोनाश्चतुस्तस्य सैकाहाः पञ्च वत्सराः ॥२६४॥
कृतार्थतां तीर्थतोयैराञ्जनेयोऽनयत् पितॄन् ।
आत्तं तादृशमश्रौषीत् स्वस्मिन् देशे पराक्रमं ॥२६५॥

पितृशोकार्दिता तस्य क्रोधेनान्तरधीयत ।
तरोरिवार्कतापेन नैशाम्बुलवसिक्तता ॥२६६॥
श्रीपर्वते पाशुपतव्रतिवेशस्तमागतं ।
आचख्यावश्वपादाख्यः सिद्धः कन्दाशनं ददत् ॥२६७॥
जन्मान्तरे लब्धसिद्धिस्त्वामस्म्युपरि साधकः ।
वाञ्छामपृच्छं राज्यार्थमभिलाषस्तु ते ऽभवत् ॥२६८॥
सयत्नं तव कर्तुं तन्मनोरथमनन्यथा ।
अथ मामित्थमादिक्षत् जपारमणशेखरः ॥२६९॥
गणोऽयं मामकः सिद्धो यस्तवोपरि साधकः ।
जन्मान्तरेऽस्य राज्येच्छां कुर्याम् अक्रमनन्यथा ॥२७०॥
भावं भवस्तद्भवतो भगवान् दत्तदर्शनः ।
साफल्यं नेष्यतीत्येवमभिधाय तिरोदधे ॥२७१॥
साम्राज्येच्छोः समामेकां तत्र तस्य तपस्यतः ।
लब्धस्मृतिः सिद्धगिरा प्रददौ दर्शनं शिवः ॥२७२॥
व्रतिवेशं तमादिष्टवाञ्छितार्थसमर्पणं ।
स जगन्निर्जयोन्निद्रं नरेन्द्रत्वमयाचत ॥२७३॥
उपेत्य मोक्षं किं क्ष्माभृद्भोगानिच्छसि भङ्गुरान् ।
इति जिज्ञासुना भावं शंभुना सोऽभ्यधीयत ॥२७४॥
स तं बभाषे शंभुं त्वां बुद्ध्वा व्याजतपोधनं ।

अभ्यधामिदमह्ना त्वं न स देवो जगद्गुरुः ॥२७५॥
महान्तो ह्यर्थिताः स्वल्पं फलन्त्यल्पेतरत् स्वयं ।
उदान्यया वदान्योऽदाद्दुग्धाब्धिं स पयोर्थिने ॥२७६॥
अस्य वैकल्पकैवल्यालाभनिश्चलचेतसः ।
नो वेत्स्यभिजनस्याभिभूतिं मर्मव्यथावहां ॥२७७॥
जगत्परिवृढः प्रौढप्रीतिस्तं स फलार्थिनं ।
कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽप्यभाषत ॥२७८॥
स जनो राज्यसौख्येषु सायुज्यावाप्तिदूतिकां ।
मदाज्ञयाश्वपादस्ते संज्ञां काले करिष्यति ॥२७९॥
इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः ।
अगच्छदश्वपादं तमापृच्छ्याभिमतां भुवं ॥२८०॥
ततो विदितवृत्तान्तो मातृगुप्ताभिषेणनात् ।
निषिध्य सविधायातानमात्यानब्रवीद्वचः ॥२८१॥
विक्रमादित्यमुत्सिक्तमुच्छेत्तुं यतते मनः ।
मातृगुप्तं प्रति न नो रोषेण दूषितं मनः ॥२८२॥
अप्रियैरपि निष्पिष्टैः किं स्यात् क्लेशासहिष्णुभिः ।
ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ॥२८३॥
यान्यब्जान्युदयं द्विषन्ति शशिनः कोऽन्यस्ततोऽसम्मतस्तन्
निर्माथिकरीन्द्रदन्तदलनं यन्नाम कोऽयं नयः ।

सामर्थ्यप्रथनाय चित्रमसमैः स्पर्द्धां विधायोन्नता ये तेषु
प्रभवन्ति तत्र जहति व्यक्तं प्रकृत्या नृपः ॥२८४॥
त्रिगर्तानां भुवं जित्वा स क्रमात्तत्र भूपतिः ।
विक्रमादित्यमशृणोत् कालधर्ममुपागतं ॥२८५॥
तस्मिन्नहनि भूभर्त्रा शोकाग्निःश्वसतानिशं ।
नास्नायि नाशि नास्वापि स्थितेनावनताननं ॥२८६॥
अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतं ।
शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिं ॥२८७॥
कैश्चिन्निर्वासितो मास्मिन् मदीयैरिति शङ्कितः ।
ययौ प्रवरसेनोऽस्य पार्श्वं मितपरिच्छदः ॥२८८॥
कृतार्घ्यं सुखासीनं ततः पप्रच्छ तं शनैः ।
विनयावनतो राजा राज्यत्यागस्य कारणं ॥२८९॥
बभाषे तं क्षणं स्थित्वा स निःश्वस्य विलम्ब्य च ।
गतः स सुकृती राजन् येन भूमिभुजो वयं ॥२९०॥
यावन्मूर्ध्नि रवेः पादास्तावत् द्योतयते दिशः ।
द्योतयेन्नान्यथा किं न ग्रावेव तपनोपलः ॥२९१॥
अथ राजाभ्यधात् केन राजन्नपकृतं तव ।
यत्प्रत्ययचिकीर्षाये तमीशमनुशोचसि ॥२९२॥
मातृगुप्तस्ततोऽवादीत् कोपस्मितसिताधरः ।

अस्मानुत्सहते कश्चिन्नापकर्तुं बलाधिकः ॥२९३॥
नयता गण्यतामस्माननवसरे ऽपि तेन कि ।
न भस्मनि हुतं सर्पिर्नोप्तं वा शस्यमूषरे ॥२९४॥
उपकारं स्मरन्तस्तु कृतज्ञत्ववशंवदाः ।
पदवीमुपकर्तॄणां यान्ति निश्चेतना अपि ॥२९५॥
निर्वाणमनुनिर्वाति तपनं तपनोपलः ।
इन्दुमिन्दुमणिः किं च शुष्यन्तमनुशुष्यति ॥२९६॥
पुण्यां वाराणसीं गत्वा तस्मान्मोक्षसुखोन्मुखः ।
इच्छामि सर्वसंन्यासं कर्तुं द्विजजनोचितं ॥२९७॥
मणिदीपनिवेशं तमन्तरेणान्धकारितां ।
बिभेमि द्रष्टुमप्युर्वीं भोगयोगे कथैव का ॥२९८॥
इत्यौचित्यनिधेस्तस्य वाणीमाकर्ण्य विस्मितः ।
धीरः प्रवरसेनो ऽपि व्याजहारोचितं वचः ॥२९९॥
सत्यं विश्वंभरा देवी भूपते रत्नसूरियं ।
उत्पत्त्या द्योतते धन्यैः कृतज्ञैर्या भवादृशैः ॥३००॥
अन्तरज्ञतया श्लाघ्यः को ऽन्यस्तस्मान्महीभुजः ।
इत्थं जडे जगत्येकस्त्वां यथावद्विवेद यः ॥३०१॥
चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः ।
धीर त्वयैव नवासु संचारो यदि दर्श्यते ॥३०२॥

पाकश्चेन्न शुभस्य मेऽद्य तदसौ प्रागेव नादात्किमु
स्वार्थश्चेन्न मयास्य किं न भजते दीनान् स्वबन्धूनयं ।
मत्तो रन्ध्रदृशोऽस्य भीर्यदि न तल्लुब्धः किमेष
त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः ॥३०३॥
अत्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता ।
शतशाखी भवत्येव यावन्मात्रापि सत्क्रिया ॥३०४॥
तत्त्वं गुणवतामग्र्यस्तत्त्वदीशश्चापि नन्दितः ।
परीक्षितो मणिरिव व्यक्तं बहुमतः सतां ॥३०५॥
तस्मादनुगृह्णाणास्मान् मा स्म त्याक्षीर्नरेन्द्रतां ।
ममापि ख्यातिमायातु गुणवत्पक्षपातिता ॥३०६॥
पूर्वं तेनाथ चरमं मयापि प्रतिपादितां ।
भवान् पाणिप्रणयिनीं विदधातु पुनर्भुवं ॥३०७॥
अव्याजौदार्यचर्यस्य श्रुत्वेति नृपतेर्वचः ।
कृतस्मितो मातृगुप्तः शनैर्वचनमब्रवीत् ॥३०८॥
यान्यक्षराण्यन्तरेण वाच्यं वक्तुं न पार्यते ।
का गतिस्तदुपादाने मर्यादोल्लंघनं विना ॥३०९॥
अतः परुषमप्यद्य किञ्चिदेव मयोच्यते ।
अव्याजार्जवमप्येतदार्यत्वमवधीर्यते ॥३१०॥
सर्वः स्मरति सर्वस्य प्रागवस्थासु लाघवं ।

आत्मैव वेत्ति माहात्म्यं वर्तमाने क्षणे पुनः ॥३११॥
पूर्वावस्था मदीया ते त्वदीया या च मे हृदि ।
ताभ्यां विमोहितावावां न विद्वोऽन्योन्यमाशयं ॥३१२॥
राजा भूत्वा कथं मादृक् प्रतिगृह्णातु संपदः ।
कथमेकपदे सर्वमौचित्यं परिमार्जतु ॥३१३॥
असाधारणमौदार्यमाहात्म्यं तस्य भूपतेः ।
भोगमात्रकृते मादृक् किं साधारणतां नयेत् ॥३१४॥
अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते ।
ध्रियमाणोऽभिमाने मे केन ते विनिवारिताः ॥३१५॥
यन्ममोपकृतं तेन तद्विना प्रत्युपक्रियां ।
जीर्णमिवाधुनाङ्गेषु प्रभवत्वेष निश्चयः ॥३१६॥
या गतिर्भूभुजोऽमुष्य मया तामनुगच्छता ।
पात्रापात्रविवेकत्वख्यातिर्नेया प्रकाश्यतां ॥३१७॥
एतावत्येव कर्तव्ये याते ऽस्मिन् कीर्त्तिशेषतां ।
भोगमात्रपरित्यागाद्विदध्यां सत्यसन्धतां ॥३१८॥
इत्युक्त्वा विरते तस्मिन् जगाद जगतीपतिः ।
त्वदीया न मया स्पृश्या त्वयि जीवति संपदः ॥३१९॥
अथ वाराणसीं गत्वा कृतकाषायसंग्रहः ।
सर्वं सन्न्यस्य सुकृती मातृगुप्तोऽभवद्यतिः ॥३२०॥

उपाजिहीर्षुरात्मानं दलद्योतार्घडम्बरैः ।
अर्चयन्निव चामुण्डामथोवाच स पार्थिवः ॥४६॥
सदाचारसुधास्वादे के भवन्तो वनौकसः ।
जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ॥४७॥
ध्रुवापायेन कायेन क्रीणतः कीर्त्तिमव्ययां ।
ममाभीष्टं प्रमार्ष्टुं ते मूढ कोऽयमाग्रहः ॥४८॥
मा वोचः किञ्चिदपरं प्रहर्तुं चेद्घृणा तव ।
न किं निजकृपाणो मे शक्तः प्रक्रान्तसिद्धये ॥४९॥
इत्युक्त्वा स स्वयं देहमुपहर्तुं समुद्यतः ।
खण्डनाय स्वमुण्डस्य विकोषं शस्त्रमाददे ॥५०॥
ततः प्रहर्तुकामस्य तस्य द्युकुसुमैः शिरः ।
करश्च दिव्यवपुषा रुद्धः केनाप्यजावत ॥५१॥
अथापश्यत् तथा भूतः कश्चिद्दिव्याकृतिं पुरः ।
न चण्डिकां न तं बध्यं न किरातं न दारकं ॥५२॥
स तं दिव्यस्तदावादीन्मां त्वं सत्त्ववशीकृतं ।
विद्धि मध्यमलोकेन्द्रो वरुणं करुणानिधे ॥५३॥
यदेतत् त्वामुपास्तेऽद्य छत्रं तन्मत्पुरात् पुरा ।
महाबलोऽहरद्भीमः पुराणः स्वसुरस्तव ॥५४॥
रसातलैकतिलकं माहात्म्यवदिदं विना ।

उपद्रवाः प्राणहराः पौराणां नः पदे पदे ॥५५॥
तदिदं प्राप्तुकामेन त्वदौदार्यं परीक्षितं ।
करुणामय मायेयं निरमायि मयेदृशी ॥५६॥
त्वदादिष्टो व्यधाज्जन्तून् व्यसून् वसुकुलात्मजः ।
प्रायश्चित्तममारेण चरसीव तदेनसः ॥५७॥
भयस्पृहाजनकयोर्धरणीधरणोचिते ।
शेषदेहे विषोद्गारफणारत्नौघयोरिव ॥५८॥
तमःप्रकाशावहयोस्तेजः क्रान्तदिगन्तरे ।
उपबुधि धूमजालज्वालापल्लवयोरिव ॥५९॥
क्षमाप्यायक्रियाभाजोः रुद्धतेजस्विमण्डले ।
प्रावृट्पयोदच्छन्नेऽह्नि सन्तापासारयोरिव ॥६०॥
द्वयोरालोकितं चित्रं जन्मैकस्मिन् महाकुले ।
तस्य त्रिकोटिहन्तुश्च तवाहिंसस्य च प्रभोः ॥६१॥ चतुर्भिः कुलकं ॥
नम्रः सम्राडथैवं स वदतो यादसां प्रभोः ।
चकार पूजां स्तोत्रेण छत्रेण च कृताञ्जलिः ॥६२॥
तं च संप्रति गृह्णन्तं प्रणयादुष्णावारणं ।
जगाद गुणिनामग्र्यो वरुणं धरणीधरः ॥६३॥
कल्पद्रुमाश्च सन्तश्च नार्हन्ति समशीर्षिकां ।
अर्थिनां प्रार्थिताः पूर्वे फलन्त्यन्ये स्वयं यतः ॥६४॥

ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः ।
ऊर्द्ध्वबाहुर्महद्भूतं प्रादुरासीन्महौजसः ॥३४०॥
नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः ।
उल्काज्योतिः कृताश्लेषः कुलाद्रिरिव दिद्युते ॥३४१॥
तमथ प्रतिशब्देन घोरेणापूरयन् दिशः ।
अत्रासं विहसन्नुच्चैरुवाच क्षणदाचरः ॥३४२॥
संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तं च शूद्रकं ।
त्वां च भूपाल पर्याप्तं धैर्यमन्यत्र दुर्लभं ॥३४३॥
वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते ।
सेतुमेतं समुत्तीर्य पार्श्वमागम्यतां मम ॥३४४॥
इत्युदीर्य निजं जानुं रक्षःपारात् प्रसारयन् ।
तन्महासरितो वारि सेतुसीमन्तितं व्यधात् ॥३४५॥
अङ्गेन रक्षःकायस्य ज्ञात्वा सेतुं प्रकल्पितं ।
वीरः प्रवरसेनोऽथ विकोषां क्षुरिकां दधे ॥३४६॥
स तयोत्कृत्य तन्मांसं कृतसोपानपद्धतिः ।
अतरद्यत्र तत् स्थानं क्षुरिकावार उच्यते ॥३४७॥
पार्श्वस्थं तं लग्नमुक्त्वा प्रातर्मत्सूत्रपातनं ।
दृष्ट्वा पुरं विधेहीति वदद्भूतं तिरोदधे ॥३४८॥
देव्या शारिकयाढ्येन यक्षेणाधिष्ठिते च सः ।

ग्रामे शारीठकेऽपश्यत् सूत्रं वेतालपातितं ॥३४९॥
भक्त्या प्रतिष्ठां प्राक् तस्मिन् निर्मोषो प्रवरेश्वरं ।
जयस्वामी स्वयं पीठे भित्वा यत्नमुपाविशत् ॥३५०॥
वेतालवेदितं लग्नं जानता जगतीभुजा ।
स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोऽभवत् ॥३५१॥
नगराप्रातिलोम्याय भक्त्या तस्य विनायकः ।
प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ ॥३५२॥
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः
पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन् निवेशिताः ॥३५३॥
वितस्तायां स भूपालो बृहत्सेतुमकारयत् ।
ख्याता ततःप्रभृत्येव तादृङ्नौसेतुकल्पना ॥३५४॥
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात् ।
मातुलःस नरेन्द्रस्य जयेन्द्रो विनिवेशनं ॥३५५॥
बुभोज सिंहलादीन् यो द्वीपान् स सचिवोऽकरोत् ।
मोराकनामा मोराकभवनं भुवनाद्भुतं ॥३५७॥
षट्त्रिंशद्गृहलक्षाणि पुरं तत्पप्रथे पुरा ।
यस्यास्तां वर्द्धनस्वामी विश्वकर्मा च स मयः ॥३५७॥
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल ।
निर्मितं तेन नगरं विभक्तैर्युक्तमापणैः ॥३५८॥

यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि ।
एतद्विपत्तौ तत्कोऽन्यो निमित्तं प्रतिभाति मे ॥८४॥
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयतां ।
ब्राह्मणस्य पशोर्वा स्यात् प्राणानां कियदन्तरं ॥८५॥
तपस्थानपि ये जघ्नुर्ब्राह्मणप्राणलब्धये ।
हा मातस्तेऽधुना भूमे प्रजापालास्तिरोहिताः ॥८६॥
इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे ।
आपन्नार्त्तिहरो राजा चिरमेवं व्यचिन्तयत् ॥८७॥
न बध्याः प्राणिन इति प्राग्योऽस्मि समकल्पयं ।
विप्रार्थमपि किं कुर्यां स प्रतिज्ञातविप्लवं ॥८८॥
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि ।
तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः ॥८९॥
नेति मे संशयभ्रान्तमेकपक्षावलम्बनं ।
संभेदावर्त्तपतितं प्रसूनमिव मानसं ॥९०॥
तनू स्वदेहोपहारेण दुर्गां तोषयता मया ।
प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः ॥९१॥
इति संचिन्त्य सुचिरं देहदानोद्यतो नृपः ।
श्वः प्रियं तव कर्त्तास्मीत्युक्त्वा विप्रं व्यसर्जयत् ॥९२॥
क्षपायां क्ष्मापतिमथ समुपाहर्तमुद्यतं ।

निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मनां ॥९३॥
इत्याद्यद्यतनस्यापि चरितं तस्य भूपतेः ।
पृथग्जनेषु संभाव्यं वर्णयन्तस्त्रपामहे ॥९४॥
अथवा रचनानिर्विशेषमार्गेण वर्त्मना ।
प्रस्थिता नानुरुन्धन्ति श्रोतृचित्तानुवर्त्तनं ॥९५॥
तस्मिन्नस्तं गते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः ।
अनादित्यमिवाशेषं निरालोकमभूज्जगत् ॥९६॥
अथ क्ष्माभृद्रत्न क्ष्मां श्रेष्ठसेनस्तदात्मजः ।
प्राहुः प्रवरसेनं यं तुञ्जीनं चाञ्जसा जनाः ॥९७॥
दोःस्तम्भसंभृतासक्तौ कृपाणमणिदर्पणे ।
संक्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत ॥९८॥
समातृचक्रं निर्माय यः पूर्वं प्रवरेश्वरं ।
पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात् ॥९९॥
गृहाङ्गनमिव क्षोणीं गणयन् वशवर्त्तिनीं ।
त्रिगर्तोर्वीं ग्रामसाख्ये प्रवरेशाय यो ददौ ॥१००॥
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनां ।
स समास्त्रिंशतं भूभृदनिस्त्रिंशाशयोऽभवत् ॥१०१॥
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ ।
साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः ॥१०२॥

ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः ।
ऊर्द्धबाहुर्महद्भूतं प्रादुरासीन्महौजसः ॥३४०॥
नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः ।
उल्काज्योतिः कृताश्लेषः कुलाद्रिरिव दिद्युते ॥३४१॥
तमथ प्रतिशब्देन घोरेणापूरयन् दिशः ।
अत्रासं विहसन्नुच्चैरुवाच क्षणदाचरः ॥३४२॥
संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तं च शूद्रकं ।
त्वां च भूपाल पर्याप्तं धैर्यमन्यत्र दुर्लभं ॥३४३॥
वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते ।
सेतुमेतं समुत्तीर्य पार्श्वमागम्यतां मम ॥३४४॥
इत्युदीर्य निजं जानुं रक्षःपारात् प्रसारयन् ।
तन्महासरितो वारि सेतुसीमन्तितं व्यधात् ॥३४५॥
अङ्गेन रक्षःकायस्य ज्ञात्वा सेतुं प्रकल्पितं ।
वीरः प्रवरसेनोऽथ विकोषां क्षुरिकां दधे ॥३४६॥
स तयोत्कृत्य तन्मांसं कृतसोपानपद्धतिः ।
अतरद्यत्र तत् स्थानं क्षुरिकाबार उच्यते ॥३४७॥
पार्श्वस्थं तं लग्नमुक्त्वा प्रातर्मत्सूत्रपातनं ।
दृष्ट्वा पुरं विधेहीति वदद्भूतं तिरोदधे ॥३४८॥
देव्या शारिकयाढ्येन यक्षेणाधिष्ठिते च सः ।

ग्रामे शारीटकेऽपश्यत् सूत्रं वेतालपातितं ॥३४९॥
भक्त्या प्रतिष्ठां प्राक् तस्मिन् निर्नीषो प्रवरेश्वरं ।
जयस्वामी स्वयं पीठे भित्वा यत्नमुपाविशत् ॥३५०॥
वेतालवेदितं लग्नं जानता जगतीभुजा ।
स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोऽभवत् ॥३५१॥
नगराप्रातिलोम्याय भक्त्या तस्य विनायकः ।
प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ ॥३५२॥
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः
पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन् निवेशिताः ॥३५३॥
वितस्तायां स भूपालो वृहत्सेतुमकारयत् ।
ख्याता ततःप्रभृत्येव तादृङ्नौसेतुकल्पना ॥३५४॥
श्रीजयेन्द्रविहारस्य वृहद्बुद्धस्य च व्यधात्॥
मातुलःस नरेन्द्रस्य जयेन्द्रो विनिवेशनं ॥३५५॥
बुभोज सिंहलादीन् यो द्वीपान् स सचिवोऽकरोत् ।
मोराकनामा मोराकभवनं भुवनाद्भुतं ॥३५७॥
षटत्रिंशद्गृहलक्षाणि पुरं तत्पप्रथे पुरा ।
यस्यास्तां वर्द्धनस्वामी विश्वकर्मा च स मयः ॥३५७॥
दक्षिणास्मिन्नेव पारे वितस्तायाः पुरा किल ।
निर्मितं तेन नगरं विभक्तैर्युक्तमापणैः ॥३५८॥

उत्पिञ्जोत्पादनासक्ते तस्मिन् भ्रात्रा यदृच्छया ।
बन्धान्मुक्तो नृत्तरणिस्तोरमाणोऽस्तमाययौ ॥१२२॥
निवार्य मरणोद्योगं मातुर्निर्वेदखेदितः ।
ययौ प्रवरसेनोऽथ तीर्थोत्सुक्याद्दिगन्तरं ॥१२३॥
रक्षिता दशमासोनाः क्ष्मामेकत्रिंशतं समाः ।
तस्मिन् क्षणे हिरण्योऽपि शान्तिं निःसन्ततिर्ययौ ॥१२४॥
तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षापराभिधः ।
एकच्छत्रश्चक्रवर्त्ती विक्रमादित्य इत्यभूत् ॥१२५॥
भूपमद्भुतसौभाग्यं श्रीर्बद्धरभसाऽभजत् ।
विहाय हरिबाहूंश्च चतुरस्सागरांश्च यं ॥१२६॥
लक्ष्मीं कृत्वोपकरणं गुणा येन प्रवर्द्धिते ।
श्रीमत्सु गुणिनोऽद्यापि तिष्ठन्त्युद्धतकन्धराः ॥१२७॥
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः ।
शकान् विनाश्य येनादौ कार्यभारो लघुः कृतः ॥१२८॥
नानादिगन्तराख्यातं गुणावत्सुलभं नृपं ।
तं कविर्मातृगुप्ताख्यः सभास्थानस्थमासदत् ॥१२९॥
स गम्भीरस्य भूभर्तुरनुभावं गुणाद्भुतं ।
विविधास्थानसंवृद्धस्तस्याभ्यूह्य व्यचिन्तयत् ॥१३०॥
सोऽयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः ।

परभागोपलम्भाय पूर्वेऽमुष्य महीभुजः ॥१३१॥
अस्मिन् राजनि तज्ज्ञैः सूरिभिः संभृतश्रुतैः ।
नाञ्जलिर्दीयते जातु मानाय च गुणाय च ॥१३२॥
भंग्यामुष्मिन् विदधती स्वाभिप्रायप्रकाशनं ।
वैदग्ध्यबन्ध्यतां नैति बुद्धिः कुलबधूरिव ॥१३३॥
खिलीकृतखलालापे युक्तायुक्तविवेकिनि ।
नायाति सेव्यमानेऽस्मिन् स्वगुणोऽनर्थकारितां ॥१३४॥
अनाप्तवद्भिः सद्विद्यदुर्विद्यसमशीर्षिकां ।
जीवन्मरणमस्याग्रे गुणिभिर्नानुभूयते ॥१३५॥
संभावनानुसारेण प्रवृत्तोऽस्माद्विवेकिनः ।
शोच्यते नाश्रितोच्छ्वासं प्रीतिदायो महाशयैः ॥॥१३६॥
गृह्णन् यथा गुणं स्वल्पमुचितप्रतिपत्तिभिः ।
अन्तरज्ञः समस्तानामयमुत्साहवर्द्धनः ॥१३७॥
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादनश्रमः ।
अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रियः ॥१३८॥
मिथ्याख्यातगुणो नाप्तो नामात्यः कलहप्रियः ।
असत्यसन्धः स्थैर्यो वा नास्थानेऽस्य महीपतेः ॥१३९॥
अश्लीलालापिनोऽन्योन्यं नर्मोक्त्या मर्मभेदिनः ।
अन्यप्रवेशासहना संहता नास्य सेवकाः ॥१४०॥

प्रासादे प्रवरेशस्य सिद्धक्षेत्रे क्षमापतेः ।
स्वर्गद्वारप्रतिभटं द्वारमद्यापि लक्ष्यते ॥३७८॥
तस्य रत्नप्रभादेव्यां जातो राजा युधिष्ठिरः ।
अपासीन्नवमासोनाः क्ष्मां च द्वाविंशतिं समाः ॥३७९॥
सर्वरत्नजयस्कन्धगुप्तशङ्खाङ्किताभिधाः ।
आसन् विहारचैत्यादिकृत्यैस्तत् सचिवा वराः ॥३८०॥
भवच्छेदाभिधं ग्रामं स्तुत्यं चैत्यादिसिद्धिभिः ।
यो व्यधात् सोऽस्य वज्रेन्द्रोऽप्यासीन्मन्त्री जयेन्द्रजः ॥३८१॥
दिक्कामिनीमुखोत्कीर्णकीर्त्तिचन्दनचन्द्रकाः ।
आसन् कुमारसेनाद्यास्तस्यान्येऽप्यग्र्यमन्त्रिणः ॥३८२॥
पद्मावत्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत् ।
लक्ष्मणापरनामा यो नरेन्द्रस्वामिनं व्यधात् ॥३८३॥
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ ।
अभूतां सुकृतोदग्रौ राज्ञी च विमलप्रभा ॥३८४॥
स विधायाधिकरणं लिखितस्थितये निजं ।
द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः ॥३८५॥
तस्यानुजो धरणिभृद्रणादित्यस्ततोऽभवत् ।
तुञ्जीनापरनामानं यं जनाः प्राहुरञ्जसा ॥३८६॥
जगद्विलक्षणं यस्य शङ्खमुद्राङ्कितं शिरः ।

अपूर्वशर्वरीशान्तर्लीनभानुश्रियं दधे ॥३८७॥
रिपुकण्ठाटवीश्वासीद्यस्य धाराधरः पतन् ।
तद्वधूनेत्रकुण्डैस्तु जलाधिक्यमधार्यत ॥३८८॥
अपूर्वो यत्प्रतापाग्निः प्रविश्योर्वीं द्विषां न्यधात् ।
नारीनेत्रेषु नीरोर्मीं मन्दिरेषु तृणाङ्कुरान् ॥३८९॥
यस्य पाणिप्रणयितां कृपाणे समुपागते ।
कबन्धेभ्यः परो नृत्यं न व्यधत्त द्विषद्बले ॥३९०॥
तस्याव्यपोह्यमाहात्म्या देवी दिव्याकृतेः प्रिया ।
तिष्णुशक्तिः क्षितिं प्राप्ता रणारम्भाभिधाभवत् ॥३९१॥
स हि जन्मान्तरे पूर्वं द्यूतकारोऽभवत् किल ।
कदापि प्राप निर्वेदं सर्वस्वं कितवैर्जितं ॥३९२॥
देहत्यागोद्यतोऽप्यासीत् प्राप्यं किं च विचिन्तयन् ।
न पर्यन्तेऽप्युपेक्षन्ते कितवाः स्वार्थसाधनं ॥३९३॥
अबन्ध्यदर्शनां विन्ध्ये देवीं भ्रमरवासिनीं ।
द्रष्टुमैच्छद्दराकाङ्क्षी निर्व्यपेक्षः स्वजीविते ॥३९४॥
भ्रमरैः शङ्खपुच्छाद्यैः खाद्यमानस्य देहिनः ।
तदास्पदं हि विशतो दुर्लङ्घ्या पञ्चयोजनी ॥३९५॥
स वज्रशङ्खपुच्छानां धीमांस्तेषां प्रतिक्रियां ।
देहेऽवश्यपरित्याज्ये मन्वानोऽभूद्दुष्करां ॥३९६॥

प्रागयोवर्मणा देहं ततो मक्षिषवर्मणा ।
तेन च्छादयता दत्तो मृल्लेपोऽथ मनोमयः ॥३९७॥
अथ भानुकरोच्चकुम्भमृल्लेपापीडितात्मकः ।
स लोष्ट इव संचारी प्रतस्थे क्रूरनिश्चयः ॥३९८॥
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समं ।
गुहा तेन ततः सान्द्रतमोभीमा व्यगाह्यत ॥३९९॥
अथोदतिष्ठन् गर्तेभ्यो घोरा भ्रमरमण्डलाः ।
पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्यरवैरिव ॥४००॥
ते तमुच्चकुम्भमृल्लेपरेणुग्रणितलोचनाः ।
सहसा नाक्रमन्ते स्म प्रकुर्वन्तोऽपि बाधितुं ॥४०१॥
रेणुभिर्बाधितदृशः ते न्यवर्तन्त षट्पदाः ।
तेऽखाण्डयंस्तु मृल्लेपं न्यपतन्नेव वा नवा ॥४०२॥
तैः खण्ड्यमानमुखण्डैर्गलतो योजनत्रयीं ।
क्रमान्मृत्कवचं तस्य पथि संतयमायंयो ॥४०३॥
ततो मुहुः प्रहरतां तेषां मक्षिषवर्मणि ।
घोरश्चटचटाघोषः प्रादुरासीद्भयंकरः ॥४०४॥
चतुर्थयोजनस्यार्द्धमतिक्रम्य विवेद सः ।
रणात्कारैर्द्विरेफाणामयोवर्मणि पातिनः ॥४०५॥
धावंस्ततोऽतिवेगेन खाद्यमानेन षट्पदैः ।

स शस्त्रवर्मणाप्नोषि चित्तं धैर्येण नो पुरः ॥४०६॥
गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान् ।
धुन्वन् कराभ्यां मधुपान् धावति स्म स धीरधीः ॥४०७॥
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षडंघ्रिभिः ।
कराभ्यामक्षिणी रक्षन् देव्यायतनमासदत् ॥४०८॥
प्रशान्ते भृङ्गसंपाते प्रकाशमवलोकयन् ।
स देव्याः पादयोरग्रे पपातोद्भ्रान्तजीवितः ॥४०९॥
स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः ।
अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ॥४१०॥
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा ।
स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ॥४११॥
प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीम्नि यां ।
घोराकारां स तां देवीं तदाऽद्राक्षीन्न तां पुनः ॥४१२॥
ददर्श पुनरुद्यानलतावासीं विलासिनीं ।
स्थितां पुष्करिणीतीरे श्यामां पुष्करलोचनां ॥४१३॥
गृहीतहारमुक्ताग्र्या बद्धापीनस्तनाञ्जलिं ।
महार्हैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकां ॥४१४॥
यावकाहारिणौ पादौ दधतीं कृच्छ्रचारिणौ ।
स्तनं छन्नमुखं द्रष्टुं तपस्यन्ताविवान्वहं ॥४१५॥

ततो भूभृद्बभाषेनं कथं सम्यग्विशालया ।
त्वयावधारितो निद्रा कथं नाभूच्च ते निशि ॥१७९॥
अथ कृत्वा क्षणाच्छ्लोकमेतं तं संव्यजिज्ञपत् ।
अवस्थाचेदमादाशां दैन्यं वा त्यक्तुमुद्यतः ॥१८०॥
शीतेनोद्धृषितस्य मासमशिवं चिन्तार्णवे मज्जतः
शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता सन्त्यज्य दूरं गता
सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥१८१॥
तदाकर्ण्य महीपालः साधुवादैः परिश्रमं ।
अभिनन्द्य कवीन्द्रं तं पूर्वस्थाने व्यसर्जयत् ॥१८२॥
अचिन्तयच्च धिङ्मां यः स्वगुणात् खिन्नचेतसः ।
दुःखोत्तप्तं वचः शृण्वन्नेवमेवाधुना स्थितः ॥१८३॥
निरर्थकान् साधुवादाननन्यस्येव विदन् मम ।
अयमज्ञातहृदयो दुःखमास्ते ध्रुवं बहिः ॥१८४॥
चिरं चिन्तयतो यत्नात् सदृशामस्य सत्क्रियां ।
देयं महार्हमद्यापि न किञ्चित् प्रतिभाति मे ॥१८५॥
अथवास्येव सूक्तेन स्मारितोऽस्म्यधुना यथा ।
वर्तते राजरहितं काम्यं काश्मीरमण्डलं ॥१८६॥
पात्रायास्मै मही तस्मात् सा मया प्रतिपाद्यते ।

अवधीर्य महीपालान् महतोऽप्यर्थासपरान् ॥१८७॥
इति निश्चित्य चतुरं क्षपायामेव पार्थिवः ।
गूढं व्यसर्जयद्दूतान् काश्मीरीः प्रकृतीः प्रति ॥१८८॥
आदिदेश च तान् यो वा दर्शयिष्यत्यासनं मम ।
मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यतां ॥१८९॥
अथ दूतेषु यातेषु लेखयित्वा स्वशासनं ।
क्ष्मापतिस्तं क्षपाशेषं कृतकृत्योऽत्यवाहयत् ॥१९०॥
मातृगुप्तस्तु नृपतेः संलापमपि निष्फलं ।
ध्यायन् गृहीतनैराश्यस्त्यक्तभार इवाभवत् ॥१९१॥
अन्तर्दध्यौ च कर्तव्यं कृतं शान्तोऽद्य संशयः ।
आशापिशाचिकात्यक्ताश्रयिष्याम्यधुना सुखं ॥१९२॥
गतानुगतिकत्वेन कोऽयमासीन्मम भ्रमः ।
जनप्रवादात् सेव्यत्वं येनास्य ज्ञातवानहं ॥१९३॥
भुञ्जानाः पवनं सरीसृपगणाः प्रख्यापिता भोगिनो
गायद्भृङ्गनिवारकाणि गदिता विस्तीर्णकर्णा गजाः ।
यश्चाभ्यन्तरसंभृतोष्मविकृतिः प्रोक्तः शमी स द्रुमो
लोकेनेति निरर्गलं प्रलपता सर्वं विपर्यासितं ॥१९४॥
अथवा विद्यतेऽमुष्य न काप्यनभिगम्यता ।
लक्ष्मीप्रणयिनो येन कृताःप्रणयिनां गृहाः ॥१९५॥

प्रागयोवर्मणा देहं ततो मक्षिपवर्मणा ।
तेन च्छादयता दत्तो मृल्लेपोऽथ नगोपमः ॥३९७॥
अथ भानुकरोच्छुष्कमृल्लेपापीडितान्तकः ।
स लोष्ट इव संचारी प्रतस्थे क्रूरनिश्चयः ॥३९८॥
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समं ।
गुहा तेन ततः सान्द्रतमोभीमा व्यगाह्यत ॥३९९॥
अथोदतिष्ठन् गर्तेभ्यो घोरा भ्रमरमण्डलाः ।
पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्यरवैरिव ॥४००॥
ते तमुच्छुष्कमृल्लेपरेणुव्रणितलोचनाः ।
सहसा नाक्रमन्ते स्म प्रहरन्तोऽपि बाधितुं ॥४०१॥
रेणुभिर्बाधितदृशः ते न्यवर्तन्त षट्पदाः ।
तेऽखाडयंस्तु मृल्लेपं न्यपतन्नेव वा नवा ॥४०२॥
तैः खण्ड्यमानमुत्खण्डैर्व्रजतो योजनत्रयीं ।
क्रमान्मृत्कवचं तस्य पथि संक्षयमाययौ ॥४०३॥
ततो मुहुः प्रहरतां तेषां मक्षिपवर्मणि ।
घोरश्चटचटाघोषः प्रादुरासीद्भयंकरः ॥४०४॥
चतुर्थयोजनस्यार्द्धमतिक्रम्य विवेद सः ।
रणत्कारैर्द्विरेफाणामयोवर्मणि पातिनः ॥४०५॥
धावंस्ततोऽतिवेगेन खण्ड्यमानेन षट्पदैः ।

स शस्त्रवर्मणामोघि चित्तं धैर्येण नो कुरः ॥४०६॥
गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान् ।
धुन्वन् कराभ्यां मधुपान् धावति स्म स धीरधीः ॥४०७॥
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः ।
कराभ्यामक्षिणी रक्षन् देव्यायतनमासदत् ॥४०८॥
प्रशान्ते भृङ्गसंपाते प्रकाशमवलोकयन् ।
स देव्याः पादयोरग्रे पपातोद्भ्रान्तजीवितः ॥४०९॥
स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः ।
अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ॥४१०॥
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा ।
स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ॥४११॥
प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीम्नि यां ।
घोराकारं स तां देवीं तदाऽद्राक्षीन्न तां पुनः ॥४१२॥
ददर्श पुनरुद्यानलतावासीं विलासिनीं ।
स्थितां पुष्करिणीतीरे श्यामां पुष्करलोचनां ॥४१३॥
गृहीतहारमुक्तार्घ्यां बद्धापीनस्तनाञ्जलिं ।
मन्दार्हैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकां ॥४१४॥
यावकाक्षारिणौ पादौ दधतीं कृच्छ्रचारिणौ ।
स्तनं छन्नमुखं द्रष्टुं तपस्वन्ताविवान्वहं ॥४१५॥

अच्छो मरेश्वरस्येयं यत्किञ्चन विधायिता ।
पृथग्जनोचिते कर्मण्यर्हतोनिदधाति यः ॥२१२॥
दुराशया धृतक्लेशं सेवमानमहर्निशं ।
ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः ॥२१३॥
उपायं तं पुरस्कृत्य सेवते सेवकः प्रभुं ।
अनन्तरज्ञस्तत्रैव योग्यं तं किल मन्यते ॥२१४॥
सुखार्थी नागारिप्रतिभयशमात् प्रत्युत सुखं
नहो शेषस्तल्पीकृततनुनिषेव्यासुरारिपुं ।
यतस्तेनामुष्मिन्नधिगतवता क्लेशसहतां
अमादायि न्यस्तं निरवधि धराभारवहनं ॥२१५॥
अयमेतद्गृहीतेषु गुणवत्सु गुणाधिकं ।
आत्मानं गुणवान् पश्यन्नास्थयैनमशिश्रियत् ॥२१६॥
अनन्तरज्ञः कोऽन्योऽस्माद्गुणान् दर्शयतेऽधिकान् ।
अस्मै गुणवते पूजां यश्चकार किलेदृशीं ॥२१७॥
यो नानाद्युतिमत्पदार्थरसिकोऽसारेऽपि शक्रायुधे
सप्रेमा स विलोक्य बर्हमिह मे किं किं न कुर्यात् प्रियं ।
इत्याविष्कृतबर्हराजि नटते यो बर्हिणोऽभोलवान्
नान्यन्मुञ्चति तं विहाय जलदं कोऽन्योऽस्ति शून्याशयः ॥२१८॥
गच्छतो मातृगुप्तस्य निर्देश्यस्यैव वर्त्मसु ।

नाभूद्भाव्यर्थमाहात्म्याद्विकल्पः कोऽपि चेतसि ॥२१९॥
अहंपूर्विकयोद्यद्भिर्निमित्तैः शुभशंसिभिः ।
स वितीर्णकरालम्ब इव न श्रममाददे ॥२२०॥
अपश्यत् स फणाकोटौ खञ्जरीटमहेः पथि ।
स्वप्ने प्रासादमारुह्य स्वं चोल्लंघितसागरं ॥२२१॥
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः ।
एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ॥२२२॥
फलं मम तनीयोऽपि काश्मीरेषु भवेद्यदि ।
अनर्घदेशमाहात्म्यात् किं किं नातिशयेत तत् ॥२२३॥
अकृच्छ्रलंघ्याः पन्थानो वल्लभातिथयो गृहाः ।
आनमन् गच्छतोऽस्य सत्क्रियाश्च पदे पदे ॥२२४॥
इत्थं विलंघिताकाशं लोलानोकहशाद्वलं ।
मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलं ॥२२५॥
सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः ।
प्रत्युद्ययुस्तं मरुतः बाल्यायाः संस्तुता भुवः ॥२२६॥
क्रमवर्त्ताभिधाने स प्रदेशे प्राप्तवांस्ततः ।
ठक्कं काम्बुवनामानं योऽद्य शूरपुरे स्थितः ॥२२७॥
नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान् ।
काश्मीरकान् महामात्यान् स्थितान् केनापि हेतुना ॥२२८॥

प्रागयोवर्मणा देहं ततो मक्षिषवर्मणा ।
तेन च्छादयता दत्तो मृल्लेपोऽथ नगोन्मयः ॥३९७॥
अथ भानुकरोत्कुम्भमृल्लेपापीडित[illegible]ः ।
स लोष्ट इव संचारी प्रतस्थे क्रूरनिश्चयः ॥३९८॥
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समं ।
गुहा तेन ततः सान्धतमोभीमा व्यगाह्यत ॥३९९॥
अथोदतिष्ठन् गर्तेभ्यो घोरा भ्रमरमण्डलाः ।
पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्यरवैरिव ॥४००॥
ते तमुत्कुम्भमृल्लेपरेणुव्रणितलोचनाः ।
सहसा नाक्रमन्ते स्म प्रकुर्वन्तोऽपि बाधितुं ॥४०१॥
रेणुभिर्बाधितदृशः ते व्यवर्तन्त षट्पदाः ।
तेऽखण्डयंस्तु मृल्लेपं न्यपतन्नेव वा नवा ॥४०२॥
तैः खण्ड्यमानमुत्खण्डैर्भ्रमतो योजनत्रयीं ।
क्रमान्मृत्कवचं तस्य पथि संजज्ञमायसो ॥४०३॥
ततो मुहुः प्रहरतां तेषां मक्षिषवर्मणि ।
घोरश्चटचटाघोषः प्रादुरासीद्भयंकरः ॥४०४॥
चतुर्थयोजनस्यार्द्धमतिक्रम्य विवेद सः ।
रणत्कारैर्द्विरेफाणामयोवर्मणि पातिनः ॥४०५॥
धावंस्ततोऽतिवेगेन खण्ड्यमानेन षट्पदैः ।

स शस्त्रवर्मणामोघि चित्तं धैर्येण नो पुरः ॥४०६॥
गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान् ।
धुन्वन् कराभ्यां मधुपान् धावति स्म स धीरधीः ॥४०७॥
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः ।
कराभ्यामक्षिणी रक्षन् देव्यायतनमासदत् ॥४०८॥
प्रशान्ते भृङ्गसंपाते प्रकाशमवलोकयन् ।
स देव्याः पादयोरग्रे पपातोद्भ्रान्तजीवितः ॥४०९॥
स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः ।
अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ॥४१०॥
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा ।
स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ॥४११॥
प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीम्नि याम् ।
घोराकारां स तां देवीं तदाऽद्राक्षीन्न तां पुनः ॥४१२॥
ददर्श पुनरुद्यानलतावासीं विलासिनीं ।
स्थितां पुष्करिणीतीरे श्यामां पुष्करलोचनां ॥४१३॥
गृहीतहारमुक्ताभ्यां बद्धापीनस्तनाञ्जलिं ।
महार्हैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकां ॥४१४॥
यावकाक्तारुणौ पादौ दधतीं कृच्छ्रचारिणौ ।
स्तनं छन्नमुखं द्रष्टुं तपस्वन्ताविवान्वहं ॥४१५॥

भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननां ।
हरिमध्यां शिवाकारां सर्वदेवमयीमिव ॥४१६॥
तां विभाव्यानवद्याङ्गीं निर्जने यौवनोर्जितां ।
निन्ये वारिनिवामेन स कामेन विधेयतां ॥४१७॥
दधती रूपमाधुर्यपूरच्छन्नामधृष्यतां ।
अप्सराः प्रत्यभात् तस्य सा किं चित्तेन देवता ॥४१८॥
कृपामृदुरवादीत् तं व्यथितोऽसि चिरं पथि ।
मुक्तः सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः ॥४१९॥
स तां बभाषे शान्तो मे भवत्या दर्शनश्रमः ।
अदेवी किं तु भवती वरं दातुं कथं क्षमा ॥४२०॥
देवी जगाद तं भद्र कोऽयं ते मनसि भ्रमः ।
देवी वा स्यामदेवी वा वरीतुं त्वां तु शक्नुयां ॥४२१॥
इति सोऽभीष्टसंप्राप्तौ कारयित्वा प्रतिश्रवं ।
दूरमुत्क्रान्तमर्यादः सङ्गमं तामयाचत ॥४२२॥
तमभ्यधात् सा दुर्बुद्धे कोऽयं तेऽनुचितो विधिः ।
प्रार्थयस्वेतरद्यस्मात् साक्षं भ्रमरवासिनी ॥४२३॥
देवीं तां जानतोऽप्यस्य नाभूद्वक्रितं मनः ।
निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः ॥४२४॥
स तामुवाच सत्यं चेद्देवि स्वां गिरमिच्छसि ।

प्रमाणीकुरु मद्वाणीमहमन्यं न कामये ॥४२५॥
पूर्वमेव हि जन्तूनां यो ऽधिवासो निलीयते ।
तिलानामिव तेषां स पर्यन्ते ऽपि न शीर्यते ॥४२६॥
देवी वा भवकान्ता वा भीमा वा शोभनापि वा ।
यादृशीं पूर्वमद्राक्षं तादृश्येवावभासि मे ॥४२७॥
तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयं ।
एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः ॥४२८॥
असक्ते हि संस्प्रष्टुं न दिव्या मर्त्यधर्मिणः ।
तद्गच्छ क्रूरसङ्कल्पेत्युक्त्वा सान्तर्दधे ततः ॥४२९॥
अशून्यजन्मा भूयासं तया देव्येति चिन्तयन् ।
प्रयागवटशाखाग्रादक्षासीत् स्ववपुस्ततः ॥४३०॥
सो ऽजायत रणादित्यो रणारम्भा च सा भुवि ।
मर्त्यभावे ऽपि यन्नैव जह्नो जन्मान्तरस्मृतिं ॥४३१॥
रतिसेनाभिधश्चोलराजः सञ्जो ऽब्धिपूजने ।
तां तरङ्गान्तराल्लेभे रत्नराजिमिवोज्ज्वलां ॥४३२॥
आबाल्याद्व्यक्तदिव्योक्तिं तामलङ्कृतयौवनां ।
दिव्यार्हां पृथिवीशेभ्यो नार्थिभ्यो ऽपि ददौ नृपः ॥४३३॥
रणादित्यनृपामात्ये दूत्यायाते तथैव तं ।
प्रत्याख्यानेच्छुमाचख्यौ सैव तद्वरणं वरं ॥४३४॥

तदर्थमेव कथितस्वोत्पत्तिं तां ततः पिता ।
दूतं कुलूतभूभर्तुः सुहृदः प्राहिणोद्गृहं ॥४३५॥
प्रहृष्टो विप्रकृष्टं तं देशं गत्वा व्यधत्त तां ।
परिणीय रणादित्यः शुद्धान्तस्याधिदेवतां ॥४३६॥
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि ।
तं मायया मोहयन्ती न पस्पर्श कदाचन ॥४३७॥
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियं ।
स्वयंभ्रमररूपा सा निर्जगाम बहिर्निशि ॥४३८॥
स्वनाम्ना स्वस्य देव्याश्च कृत्वा परगृहद्वयं ।
माहेश्वरः शैललिङ्गे कारयामास कारुभिः ॥४३९॥
ययः प्रतिष्ठाप्रसङ्गेऽथ सज्जे तल्लिङ्गयोर्द्वयं ।
देशान्तरागतः कश्चित् दूषयामास देववित् ॥४४०॥
स दृष्टप्रत्ययः शश्वत् तयोर्घटितलिङ्गयोः ।
अश्मखण्डैः समण्डूकैर्बभाषे गर्भमावृतं ॥४४१॥
किं कर्तव्यतया मूढं प्रतिष्ठाविघ्नविह्वलं ।
दिव्यदृष्टिः स्वयं देवी ततो राजानमब्रवीत् ॥४४२॥
राजन् गिरिसुतोद्वाहे पौरोहित्यं पुरा भजन् ।
समर्चीद्दिवमादितं पूजाभाण्डात् प्रजापतिः ॥४४३॥
तां विष्णोः प्रतिमां वीक्ष्य पूजितां तेन धूर्जटिः ।

शून्यामिव तदा मेने शक्तिरूपां विना शिवं ॥४४४॥
निमज्जितैर्लोकितानि रत्नान्यथ सुरासुरैः ।
पिण्डीकृत्य स्वयं चक्रे लिङ्गं भुवनवन्दितं ॥४४५॥
तां विष्णुप्रतिमां तच्च लिङ्गमीशानपूजितं ।
स्वयं प्रजासृजः पूज्यं कालेनादत्त रावणः ॥४४६॥
तेनाप्यभ्यर्च्यमानं तं लङ्कायामनयाचिरं ।
देवद्वयं रावणान्ते नीतमासीच्च वानरैः ॥४४७॥
तिर्यक्तया ते कपयो मुधा कि मानसौकसः ।
शान्तोत्सुकाः शनैर्देवौ न्यधुरुत्तरमानसे ॥४४८॥
प्रागेव सरसस्तस्मात् कुशलैः शिल्पिभिर्मया ।
तावुद्धृतौ प्रातरत्र प्राप्तौ द्रष्टव्यस्यसंशयं ॥४४९॥
तयोः प्रतिष्ठा क्रियतामित्युक्ता पृथिवीभुजं ।
देवी प्रयाता शुद्धात्मा सिद्धान् सस्मार खेचरान् ॥४५०॥
ते ध्यातमात्राः संप्राप्ता देव्यादेशेन पावसः ।
उद्धृत्य नृपतेर्धाम्नि देवौ करिकरौ न्यधुः ॥४५१॥
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः ।
प्रातर्नृपगृहे दृष्ट्वा परं विस्मयमाययौ ॥४५२॥
सज्जे प्रतिष्ठालिङ्गेऽथ माहेश्वरतया नृपः ।
रणेश्वरप्रतिष्ठायां पूर्वं यावत् समुद्यतः ॥४५३॥

रणारम्भानुभावेन तावदेवाद्भुतावहः ।
स्वयं पीठे रणस्वामी भित्त्वा यत्नमुपाविशत् ॥४५४॥ युग्मकं॥
कर्तुं प्रभावजिज्ञासां राज्ञा दत्तधनस्ततः ।
स स्वयंभूः स्वयं भक्तांस्तांस्तान् ग्रामानदापयत् ॥४५५॥
कुम्भदासतया छन्नः सिद्धो ब्रह्माभिधो वसन् ।
परिज्ञाय तयोर्देव्या प्रतिष्ठाकर्म कारितः ॥४५६॥
स वृत्तप्रत्यभिज्ञः सन् प्रतिष्ठाप्य रणेश्वरं ।
व्योम्ना व्रजन् रणस्वामी प्रतिष्ठां गूढमादधे ॥४५७॥
जनास्त्वलक्षयन् यत् स स्वयं पीठमवातरत् ।
इति केषामपि हृदि प्रवादोऽद्यापि वर्तते ॥४५८॥
सा ब्रह्मप्रतिमं सिद्धं देवी ब्रह्मविदां वरं ।
अकारयत् तमुद्दिश्य परार्द्धं ब्रह्मसत्तमं ॥४५९॥
रणारम्भास्वामिदेवौ दम्पतीभ्यां व्यधीयत ।
मठः पाशुपतानां च ताभ्यां प्रद्युम्नमुर्द्धनि ॥४६०॥
आरोग्यशाला निरधाप्युल्लाघत्वाय रोगिणां ।
तेन सेनामुखी देवी भयशान्त्यै च कारिता ॥४६१॥
ख्यातिं रणपुरस्वामिसंज्ञया सर्वतोगतं ।
स सिंहरोत्सिकाग्रामे मार्त्तण्डं प्रत्यपादयत् ॥४६२॥
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः ।

दक्षिणास्मिन् रणेशस्य पार्श्वे देवोऽमृतेश्वरः ॥४६३॥
मेघवाहनभूभर्तृपत्न्या भिन्नाख्यया कृते ।
विहारेऽपि तया बुद्धबिम्बं साधु निवेशितं ॥४६४॥
राज्ञे देव्यनुरक्ताय सानुक्रोशाय सैकदा ।
पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरं ॥४६५॥
माभून्मोघास्य मत्प्राप्तिरिति मत्वा तयार्पितं ।
असाधयत् स तं प्राप्य वसन् तु वत्सरान् बहून् ॥४६६॥
कृत्वेष्टिकापथे कष्टं ततो नन्दिशिलां गतः ।
भूरिभिर्वत्सरैर्मन्त्रसिद्धेः प्रणयितां ययौ ॥४६७॥
स्वप्नैश्च सिद्धलिङ्गैश्च जातो भङ्गुरनिश्चयः ।
चन्द्रभागाजलं भित्वा नमुचेः प्राविशद्बिलं ॥४६८॥
बिलेऽपावृततां याते दिवसानेकविंशतिं ।
प्रविश्य पौरान् प्राङ्निन्ये दैत्यस्त्रीभोगभोगितां ॥४६९॥
एवं स भूपतिर्भूत्वा भूवं वर्षशतत्रयं ।
निर्वाणाख्यातनिर्व्यूढपातालेश्वरमासदत् ॥४७०॥
सानुगे नृपतौ याते दैतेयदयितान्तिकं ।
देवी सा वैष्णवीशक्तिः श्वेतद्वीपमगाद्भुत ॥४७१॥
राजवंशेष्वनेकेषु राज्ञीवंशद्वये परं ।
द्वयोरेवात्र निर्व्यूढिं प्रजावात्सल्यमागतं ॥४७२॥

रणादित्यस्य गोनन्दवंशे रामस्य राघवे ।
लोकान्तरसुखस्यापि ययोरंशभुजः प्रजाः ॥४७३॥
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत् सुतः ।
तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः ॥४७४॥
राजा ब्रह्मगलूनाभ्यां सचिवाभ्यां समं महीं ।
सोऽपासीद्वासवसमो द्वाचत्वारिंशतिं समाः ॥४७५॥
चक्रे ब्रह्ममठं ब्रह्मा गलूनो लूनदुष्कृतः ।
रत्नावल्याख्यया बध्वा विहारं निरमापयत् ॥४७६॥
राज्ञोऽनन्तरजस्तस्य राजाभूत् तदनन्तरं ।
तापितारातिभूपालो बालादित्यो बलोर्जितः ॥४७७॥
लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन् ।
यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोऽभजन्मुखं ॥४७८॥
आसन् येऽरिमनोगाधबोधदण्डा इवाहृताः ।
यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्ववारिधौ ॥४७९॥
प्रभावाङ्केन वङ्गालां जित्वा येन व्यधीयत ।
काश्मीरिकनिवासाय कालम्व्याख्यो जनाश्रयः ॥४८०॥
काश्मीरिषु धनोदग्रमग्रहारं द्विजन्मनां ।
राजा मडवराज्ये यो भेडराख्यमकारयत् ॥४८१॥
विशां विपाटितारिष्टमरिष्टोत्सादने व्यधात् ।

वल्लभा यस्य विम्बोष्ठी विम्बा विम्बेश्वरं व्यधात् ॥४८२॥
भ्रातरो मन्त्रिणस्तस्य त्रयो मठसुरोकसः ।
सेतोश्च कारका आसन् खड्गशत्रुघ्नमालवाः ॥४८३॥
बभूव तस्य भूभर्तुर्भुवनाद्भुतविक्रमा ।
तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी ॥४८४॥
तां वीक्ष्य लक्षणोपेतां मृगाक्षीं पितुरन्तिके ।
अमोघप्रत्ययो व्यक्तं व्याजहारेति दैववित् ॥४८५॥
भविता तव जामाता जगतीभोगभाजनं ।
त्वद्दत्तमेव साम्राज्यं गोनन्दान्वयजन्मनां ॥४८६॥
सुतासन्तानसाम्राज्यमनिच्छन्नथ पार्थिवः ।
दैवं पुरुषकारेण जेतुमासीत् कृतोद्यमः ॥४८७॥
अराजान्वयिने दत्ता नेयं साम्राज्यकारिणी ।
भवेति प्रददौ कन्यां न कस्मैचन भूभुजे ॥४८८॥
हेतुं स्वरूपतामात्रं कृत्वा जामातरं नृपः ।
अथाश्वघामकायस्थं चक्रे दुर्लभवर्द्धनं ॥४८९॥
मातुः कर्कोटनागेन सुस्नातायाः समीयुषा ।
राज्यायेव हि संजातो राज्ञा नाज्ञायि तेन सः ॥४९०॥
निश्चिन्वते हि जंमन्या यमेवायोग्यमाग्रहात् ।
जिगीषयेव तत्रैव निदधाति विधिः शुभं ॥४९१॥

मात्सर्येण जहद्वहान् विसदृशे धूमध्वजे योग्यतां
ज्ञात्वा स्वां निदधत् त्विषं दिनपतिर्ह्रास्यः प्रशान्त्युन्मुखः ।
देवं वेत्ति न यः शिखी स परतो नामास्तु तत्संभवाः
स्युर्दीपा अपि यद्वशेन जगतस्तिग्मांशुविस्मारकाः ॥४१२॥
धिया भाग्यानुगामिन्या चेष्टमानो नयोचितं ।
अभूत् सर्वस्य चक्षुष्यः स तु दुर्लभवर्द्धनः ॥४१३॥
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथां ।
कौबेरभाग्यसाम्यं च शनकैः श्वशुरोऽनयत् ॥४१४॥
पित्रोः प्रेयस्तयोद्धृत्ता तारुण्यादिमदेन च ।
राजपुत्री यथावत् तु गणयामास नैव तं ॥४१५॥
स्वैरिणीसंगमो भोगा युवानोऽग्रे पितुर्गृहं ।
पत्युर्मृदुत्वमित्यस्याः किं नाभूच्छीलविघ्नकृत् ॥४१६॥
सा नित्यदर्शनाभ्यासाच्छनकैर्विशता मनः ।
अनङ्गलेखा खङ्गेन संप्रायुज्यत मन्त्रिणा ॥४१७॥
छन्नप्रेमसुखाभ्यासनष्टह्रीभीतिसंभ्रमा ।
धार्ष्ट्यं दिनाद्दिनं यान्ती ततस्तन्मयतां ययौ ॥४१८॥
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः ।
अन्तःपुरे यथा कामं विजह्रार तया सह ॥४१९॥
उपलेभे च शनकैस्तस्यास्तं शीलविप्लवं ।

विरागलिङ्गैरुच्यद्भिर्धीमान् दुर्लभवर्द्धनः ॥५००॥
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने ।
अकाण्ड एव प्रोत्थाय पश्यन्ती सस्मितं पथः ॥५०१॥
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चलैः ।
तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ॥५०२॥
तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता ।
रिरंसां तस्य संलक्ष्य सखीभिर्बद्धसंकथा ॥५०३॥
तच्चुम्बने भुग्नकण्ठी तदाश्लेषासहाङ्गका ।
तत्संभोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता ॥५०४॥
भवेद्धि प्रायशो योषित्प्रेमविक्रीतचेतना ।
निवेदयन्ती दौःशील्यपिशाचावेशवैकृतं ॥५०५॥ कुलकं।
निगूढदारदौरात्म्यचिन्ताकृशवपुस्ततः ।
शुद्धान्तमविशत् ज्ञातुं निशि दुर्लभवर्द्धनः ॥५०६॥
योऽपश्यत् सुरतक्लान्तिसुलभस्वापनिःसहां ।
दुर्ज्ञातभर्तुरङ्गेषु प्रत्युप्तामिव वल्लभां ॥५०७॥
श्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ ।
निवेदयन्तीं तत्कालमेव निर्वहणं रतेः ॥५०८॥
अन्यस्यापि क्रुधो हेतुं पुनरप्यक्षमावहां ।
तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ॥५०९॥

ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः ।
ऊर्द्धबाहुर्महद्भूतं प्रादुरासीन्महौजसः ॥३४०॥
नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः ।
उल्काज्योतिः कृताश्लेषः कुलाद्रिरिव दिद्युते ॥३४१॥
तमथ प्रतिशब्देन घोरेणापूरयन् दिशः ।
अत्रासं विहसन्नुच्चैरुवाच क्षणदाचरः ॥३४२॥
संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तं च शूद्रकं ।
त्वां च भूपाल पर्याप्तं धैर्यमन्यत्र दुर्लभं ॥३४३॥
वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते ।
सेतुमेतं समुत्तीर्य पार्श्वमागम्यतां मम ॥३४४॥
इत्युदीर्य निजं जानुं रक्षःपारात् प्रसारयन् ।
तन्महासरितो वारि सेतुसीमन्तितं व्यधात् ॥३४५॥
अङ्गेन रक्षःकायस्य ज्ञात्वा सेतुं प्रकल्पितं ।
वीरः प्रवरसेनोऽथ विकोषां क्षुरिकां दधे ॥३४६॥
स तयोत्कृत्य तन्मांसं कृतसोपानपद्धतिः ।
अतरद्यत्र तत् स्थानं क्षुरिकावार उच्यते ॥३४७॥
पार्श्वस्थं तं लग्नमुक्त्वा प्रातर्मत्सूत्रपातनं ।
दृष्ट्वा पुरं विधेहीति वदद्भूतं तिरोदधे ॥३४८॥
देव्या शारिकयाढ्येन यक्षेणाधिष्ठिते च सः ।

ग्रामे शारीठकेऽपश्यत् सूत्रं वेतालपातितं ॥३४९॥
भक्त्या प्रतिष्ठां प्राक् तस्मिन् निर्नीषो प्रवरेश्वरं ।
जयस्वामी स्वयं पीठे भित्वा यत्नमुपाविशत् ॥३५०॥
वेतालवेदितं लग्नं जानता जगतीभुजा ।
स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोऽभवत् ॥३५१॥
नगराप्रातिलोम्याय भक्त्या तस्य विनायकः ।
प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ ॥३५२॥
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः
पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन् निवेशिताः ॥३५३॥
वितस्तायां स भूपालो बृहत्सेतुमकारयत् ।
ख्याता ततःप्रभृत्येव तादृग्सेतुकल्पना ॥३५४॥
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात्
मातुलःस नरेन्द्रस्य जयेन्द्रो विनिवेशनं ॥३५५॥
बुभोज सिंहलादीन् यो द्वीपान् स सचिवोऽकरोत् ।
मोराकनामा मोराकभवनं भुवनाद्भुतं ॥३५७॥
षटत्रिंशद्गृहलक्षाणि पुरं तत्पप्रथे पुरा ।
यस्यास्तां वर्द्धनस्वामी विश्वकर्मा च स मयः ॥३५७॥
दक्षिणास्मिन्नेव पारे वितस्तायाः पुरा किल ।
निर्मितं तेन नगरं विभक्तैर्युक्तमापणैः ॥३५८॥

मात्सर्येण जहज्जहान् विसदृशे धूमध्वजे योग्यतां
ज्ञात्वा स्वां निदधत् विषं दिनपतिर्ह्रास्यः प्रशान्त्युन्मुखः ।
देवं वेत्ति न यः शिखी स परतो नामास्तु तत्संभवाः
स्युर्दीपा अपि यद्वशेन जगतस्तिग्मांशुविस्मारकाः ॥४१२॥
धिया भाग्यानुगामिन्या चेष्टमानो नयोचितं ।
अभूत् सर्वस्य चक्षुष्यः स तु दुर्लभवर्द्धनः ॥४१३॥
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथां ।
कौवेरभाग्यसाम्यं च शनकैः श्वशुरोऽनयत् ॥४१४॥
पित्रोः प्रेयस्तयोद्धृत्ता तारुण्यादिमदेन च ।
राजपुत्री यथावत् तु गणयामास नैव तं ॥४१५॥
स्वैरिणीसंगमो भोगा युवानोऽग्रे पितुर्गृहं ।
पत्युर्मृदुत्वमित्यस्याः किं नाभूच्छीलविघ्नकृत् ॥४१६॥
सा नित्यदर्शनाभ्यासाच्छनकैर्विशता मनः ।
अनङ्गलेखा खङ्खेन संप्रायुज्यत मन्त्रिणा ॥४१७॥
छन्नप्रेमसुखाभ्यासनष्टह्रीभीतिसंभ्रमा ।
धार्ष्ट्यं दिनाद्दिनं यान्ती ततस्तन्मयतां ययौ ॥४१८॥
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः ।
अन्तःपुरे यथा कामं विजहार तया सह ॥४१९॥
उपलेभे च शनकैस्तस्यास्तं शीलविप्लवं ।

विरामलिङ्गैरुध्यद्भिर्धीमान् दुर्लभवर्द्धनः ॥५००॥
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने ।
अकाण्ड एव प्रोत्काय पश्यन्ती सस्मितं पथः ॥५०१॥
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चलैः ।
तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ॥५०२॥
तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता ।
रिरंसां तस्य संलक्ष्य सखीभिर्बद्धसंकथा ॥५०३॥
तच्चुम्बने भुग्नकण्ठी तदाश्लेषासहाङ्गिका ।
तत्संभोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता ॥५०४॥
भवेद्धि प्रायशो योषित्प्रेमविक्रीतचेतना ।
निवेदयन्ती दौःशील्यपिशाचावेशवैकृतं ॥५०५॥ कुलकं।
निगूढदारदौरात्म्यचिन्ताकृशवपुस्ततः ।
शुद्धान्तमविशत् ज्ञातुं निशि दुर्लभवर्द्धनः ॥५०६॥
योऽपश्यत् सुरतक्लान्तिसुलभस्वापनिःसहां ।
दुर्ज्ञातभर्तुरङ्गेषु प्रत्युप्तामिव वल्लभां ॥५०७॥
श्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ ।
निवेदयन्तीं तत्कालमेव निर्वहणां रतेः ॥५०८॥
अन्यस्यापि क्रुधो हेतुं पुनरप्यक्षमावहां ।
तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ॥५०९॥

प्रजिहीर्षुः स्म रोषेण विमर्शेन निवारितः ।
प्रकृत्येव प्रकृत्येव निवृत्तं स्वममन्यत ॥५१०॥
ततस्तथाविधः क्षुभ्यत्प्रकोपावेशसागरः
विचारवेलया तस्य बलात्क्षममनीयत ॥५११॥
नमस्तस्मै ततः कोऽन्यो गण्यते वशिनां धुरि ।
जीर्यन्ति येन पर्याप्ता ईर्ष्याविषविसूचिकाः ॥५१२॥
सोऽचिन्तयदहो कष्टाश्चेष्टारागानुगा इमाः ।
विचारबन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधोनराः ॥५१३॥
स्त्रीति नामेन्द्रियार्थोऽयमिन्द्रियार्था यथा परे ।
तथैव सर्वसामान्या वशिनामत्र काः क्रुधः ॥५१४॥
निसर्गतरला नारीः को नियन्त्रयितुं क्षमः ।
नियन्त्रणेन किं वास्याद्यत् सतां स्मरणोचितं ॥५१५॥
यः शुनोरिव सङ्घर्ष एकार्थाभिनिविष्टयोः ।
रागिणोर्यदि मानः स कोऽवमानस्ततः परः ॥५१६॥
ममकारो मृगाक्षीषु क इवायं सचेतसां ।
स्वदेहेऽनुपपन्नोऽपि यः सोऽन्यत्र कथं मतः ॥५१७॥
उद्वेगोत्पादनादेषा बध्या चेत् प्रतिभाति मे ।
रागस्तद्विस्मृतः कस्मान्मूलमुद्वेगशाखिनः ॥५१८॥
सप्तपातालनिक्षिप्तमूलो रागमहीरुहः ।

भूमिभूतमनुत्याद्य द्वेषमुन्मूल्यते कथं ॥५१९॥

द्वेषो नामैष दुर्धर्षो जितो येन विवेकिना ।
क्षणार्द्धेनैव रागस्य तेन नामापि नाशितं ॥५२०॥

वीक्ष्यैतद्दिव्यया दृष्ट्या रागिणां शस्यमौषधं ।
ईर्ष्या जेया ततो रागः स्वयमाशा पलायते ॥५२१॥

इति ध्यात्वा लिखद्वर्णान् खड्गस्यांशुकपल्लवे ।
बध्योऽपि न कृतो यत् त्वं स्मर्तव्यं तत् तवेत्यसौ ॥५२२॥

शनैरलक्ष्यमाणोऽथ याते दुर्लभवर्धने ।
त्यक्तनिद्रः स मन्त्री तद्दृष्ट्वा वर्णानवाचयत् ॥५२३॥

दाक्षिण्यात् प्रापादस्यास्य खड्गः स मनसा नता ।
विसस्माराननङ्गलेखां दृष्ट्यो तु प्रत्युपक्रियां ॥५२४॥

तस्योपकर्तुमुचितं प्रतिकारमिच्छोश्चिन्ता विशन्नतु
मनः स्मरवाणपंक्तिः ।
दृग्गोचरे परिचयप्रणयं प्रपेदे निर्निद्रता न तु
कदाचन राजपुत्री ॥५२५॥

भूत्वा सप्तत्रिंशतिमब्दान् सचतुर्भिर्मासैर्वन्द्यं
मूर्द्धनि रत्नं नृपतीनां ।
तस्मिन् काले लोकसपायोज्ज्वलकृत्यो बालादित्यो
बालशशाङ्काङ्कितमौलिः ॥५२६॥

पूर्वं विपन्नतनयेऽभिजनस्य शेषे गोनन्दसन्ततिरजायत
तत्र शान्ता ।
प्राग्दन्तिभुग्ननलिनाऽथ कठप्रविष्टतोयौघपाटितबिसा
नलिनीव दीना ॥ ५२७ ॥
अथ शिथिलितमुख्यामात्यैर्विमत्यविघ्नः
कनकघटविमुक्तैः पावनैस्तीर्थतोयैः ।
कथमपि स कृतघ्नो राजजामातुरुच्चैर्व्यधित
विधिवदिष्टं मूर्ध्नि राज्याभिषेकं ॥ ५२८ ॥
कर्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणाद्योतश्रेणि-
फणाङ्कुराङ्कितपृष्ठकाङ्कुर्मक्षीमुद्वहन् ।
ज्ञातिप्रीतिसतोषशेषफणाभृत्संफुल्लहृत्पल्लव-
न्यासावर्तकृहाटकाब्जपटलस्रग्धामशोभोऽभवत् ॥ ५२९ ॥
अथ विगलिता गोनन्दोर्वीभुजोऽभिजनाः शुचेरतिशुचिनि
भूः कर्कोटाह्वे कुले व्यधित स्थितिं ।
चिरपरिचितात् स्वर्गाभोगाध्वनः पतनं श्रिता
त्रिभुवनगुरोः शम्भोर्मौलाविवामरनिम्नगा ॥ ५३० ॥
राजान्। १० आदितः ५३ ग्रन्थाः । ५२५
इतिश्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य
कृतौ राजतरङ्गिण्यां तृतीयस्तरङ्गः समाप्तः ।

## ॥ अथ चतुर्थस्तरङ्गः ॥

तद्गीतव्यतिरेकमौलिनयादेहेन मिश्रीभवन्
निष्प्रत्यूहमिह व्यपोहतु वपुः स्थाणोरभद्राणि वः ।
वेण्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता
जूटाहेरपि यत्र भाति दयिता मूर्त्येव पृक्ता तनुः ॥ १ ॥
स मह्लीं राजकन्यां च प्राप्तवानेकतः कुलात् ।
रत्नानां च सुतानां च राजाभूद्भाजनं शनैः ॥ २ ॥
पत्युर्गोपितदोःशील्यात् तुल्यसौभाग्यगौरवा ।
अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ॥ ३ ॥
शिशुरेवायुषोऽल्पत्वं दैवज्ञोक्तं विचिन्तयन् ।
राज्ञः सुतो मल्लणाख्यो मल्लणस्वामिनं व्यधात् ॥ ४ ॥
पारे विशोककोटाद्रौ प्रदत्तप्रतिपत्तिना ।
अदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा ॥ ५ ॥
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिं ।
षट्त्रिंशता स वर्षाणां क्ष्मावृषोऽस्तमुपाययौ ॥ ६ ॥
अनङ्गदेव्यां संभूतस्तस्य दुर्लभकः सुतः ।
शशास वासवसमस्ततो वसुमतीं कृती ॥ ७ ॥

मातामहस्य यो मात्रा दौहित्रस्तनयीकृतः ।
प्रतापादित्य इत्याख्यां तत्कुलानुगुणां दधे ॥ ८ ॥
श्रोडैनैडविडात् प्राप्तश्रिया यन्मन्त्रिणा कृता ।
अग्रहारा ह्यनुमता पुण्यानमतसंपदा ॥ ९ ॥
प्रतापतापितारातिः प्रतापपुरपत्तनं ।
मघवन्नगरस्पर्द्धि दीर्घबाहुर्व्यधत्त सः ॥ १० ॥
नानादिगन्तरायाततत्तत्क्रयिकसंकुले ।
नोणाभिधोऽवसत् तस्य देशे रौहीतको वणिक् ॥ ११ ॥
रौहीतदेशे जातानां निवेशाय द्विजन्मनां ।
महागुणो नोणमठं पुण्यश्रेष्ठं चकार सः ॥ १२ ॥
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः ।
अर्चितोऽभवदेकाहमुपचारैर्नृपोचितैः ॥ १३ ॥
प्रातः सुखासिकां प्रेम्णा पृष्टोऽथ पृथिवीभुजा ।
शीर्षव्यथामकथयत् प्रजातां दीपकज्जलैः ॥ १४ ॥
ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः ।
वसंस्तदास्पदेऽद्राक्षीत् क्षपायां मणिदीपकान् ॥ १५ ॥
विलासित्वेन लक्ष्म्या च तादृश्या तस्य विस्मितः ।
अथ द्वित्राण्यहान्यासीत् तत्रैव स कृतार्हणाः ॥ १६ ॥
एकदा तेन तत्कान्ता व्यलोकि ललिताकृतिः ।

श्रीनरेन्द्रप्रभा नाम कुर्म्ये क्रिमकराननना ॥ १७ ॥
उत्तजपूर्णकुम्भाङ्कसद्दुर्वाङ्कितविभ्रमं ।
मूर्तिमन्मङ्गलमिव स्मरस्य च गृहस्य च ॥ १८ ॥
कुर्म्यस्य निर्जनतया स निःशङ्कविहारिणीं ।
तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे ॥ १९ ॥
सापि दर्शितमालीभिः किञ्चित् साचीकृताननना ।
अपश्यत् काश्यपीकान्तं श्रोत्रविश्रान्तया दृशा ॥ २० ॥
प्राग्जन्मप्रेमबन्धाद्वा निदेशाद्वा मनोभुवः ।
सपक्षपातं सा तस्यै दृष्ट्वैव विदधे मनः ॥ २१ ॥
क्षणाद्लब्धस्पर्शोऽपि तां सौभाग्यसुधामयीं ।
अज्ञातामपि संस्पृश्य स्थितामिव विवेद सः ॥ २२ ॥
कुर्म्यस्तम्भच्छन्नगात्री क्षणं भूत्वा जगाम सा ।
व्यावर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः ॥ २३ ॥
गृहीतहृदयस्तन्व्यास्तावतेव महीपतिः ।
स चिन्ताजिह्मनयनो राजधानीं शनैर्ययौ ॥ २४ ॥
तत्र तस्य तदाकारध्यानावहितचक्षुषः ।
समन्तःपुरप्रीत्या प्रपेदे मानवं तनुः ॥ २५ ॥
अचिन्तयत् स धिक् कष्टं रूढोऽयमशुभावहः ।
अस्मिन् मे मानसोद्याने रागनामा विषद्रुमः ॥ २६ ॥

अहो नु सुभगा रागवृत्तिश्चित्तं विजित्य यः ।
विवेकादीन् व्यधाद्दूरे सुहृदः परिपन्थकान् ॥ २७ ॥
भाव्यं कौलीनभीतेन येन भूमि[illegible]ा सता ।
तस्य मे दुःसहः कोऽयं सदाचारविपर्ययः ॥ २८ ॥
यत्र दारापहरणं राजैव कुरुते विशां ।
परः को नाम तत्रास्तु शमिता नीत्यतिक्रमे ॥ २९ ॥
विमृष्यन्निति भूपालो विस्मर्तुमभवत् क्षमः ।
न पद्धतिं साधुसेव्यां न च तां दीर्घलोचनं ॥ ३० ॥
तमथ प्रथितास्वस्थं नेर्दीयामरणं वणिक् ।
स जनाज्ज्ञातवृत्तान्तः सुजनो विजनेऽब्रवीत् ॥ ३१ ॥
इमामवस्थां प्राप्तोऽसि किं धर्मेण निरुध्यसे ।
न प्राणसंशये जन्तोरकृत्यं नाम किञ्चन ॥ ३२ ॥
यन्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्मसंशये ।
तेषामपीदृशे कृत्ये श्रूयते संयमव्ययः ॥ ३३ ॥
यशो ऽनुरोधादुचितं नापि देहमुपेक्षितुं ।
स्वकीर्त्तिर्न्नि परासूनां कीर्णाकर्णरसायना ॥ ३४ ॥
मा भून्मदनुरोधस्ते त्वत्प्रियार्थं हि पार्थिव ।
प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा ॥ ३५ ॥
एवमुक्तोऽपि नाधत्ते तां चेत् तत् सा सुरास्पदात् ।

गृह्यतां नर्तकी भूत्वा नृत्यज्ञत्वान्मयार्पिता ॥३६॥
तेनेति प्रेर्यमाणः स बलिना च मनोभुवा ।
प्राग्लज्जामथ जग्राह कथञ्चित् तां सुलोचनां ॥३७॥
कृत्यैरुदात्तैः सापास्ततादृक्चारित्र्यलाघवा ।
नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरं ॥३८॥
क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतं ।
प्रासोष्ट पार्थिववधूर्निधानमिव मेदिनी ॥३९॥
तस्याभिजनमालिन्यं स्वच्छैरच्छेदि तद्गुणैः ।
शाणास्मककणैः कार्ष्ण्यमाकरोत्थं मणेरिव ॥४०॥
धूमाद्व्योममलीमसाच्छुचिपयः सूते घनस्योद्गमो
लोहस्यातिसितस्य जातिरचलात् कुण्ठाश्ममालामयात् ।
किं चात्यन्तजडाज्जलाद्द्युतिमतो ज्वालाध्वजस्योद्भवो
जन्मावध्यनुकारिणो न महतां सत्यं स्वभावाः क्वचित् ॥४१॥
तारापीडोऽपि तनयः क्रमात् तस्यामजायत ।
अविमुक्तापीड नामा मुक्तापीडोऽपि भूपतेः ॥४२॥
वज्रादित्योदयादित्यललितादित्यसंज्ञकाः ।
प्रतापादित्यजाः ख्याताश्चन्द्रापीडादयोऽपि ते ॥४३॥
वर्षान् पञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः ।
पुण्यनिःश्रेणिभिः पुण्यामारुरोह दिवं शनैः ॥४४॥

राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोऽभवत् ।
पीडितेन्दुत्विषा कीर्त्या कलेः पीडां चकार यः ॥ ४५ ॥
एकपादाकृतिर्धर्मः समस्येवोज्झितो नृपैः ।
शुद्धश्लोककृता येन पादैः संयोजितस्त्रिभिः ॥ ४६ ॥
यं क्षमाविक्रममुखाः परस्परविरोधिनः ।
सिषेविरे गुणास्तुल्यं दिव्योद्यानमिवर्तवः ॥ ४७ ॥
स्थाने स्थाने यदीया श्रीस्तुल्यमाप्याययत्यभूत् ।
द्रुमानुद्यानकुल्येव निखिलाननुजीविनः ॥ ४८ ॥
दोषांस्त्यक्त्वान्यभूपेषु यं शुद्धा श्रीरशिश्रियत् ।
मार्गाद्रिष्वोघकालुष्यं क्षिप्त्वा सिन्धुरिवार्णवं ॥ ४९ ॥
कार्यज्ञो यो नतश्चक्रे यत्फलेऽभूद्विविज्ञधीः ।
परं समाचरन् स्तुत्यं स्तूयमानस्त्रपां दधे ॥ ५० ॥
व्यनीयत न योऽमात्यैर्विनयं तान् स्वाशिक्षयत् ।
वज्रं न भिद्यते कैश्चिच्छिनत्त्यन्यान् मणींस्तु तत् ॥ ५१ ॥
यस्य धर्मभयादासीत् संत्याज्यो धर्मसंशये ।
निजोऽपि पक्षः कुलिशत्रासादिव गरुत्मता ॥ ५२ ॥
न्यायं दर्शयता वर्त्म तेन राज्ञा प्रवर्तिताः ।
स्थितयो वीतसन्देहा भास्वतेव दिनक्रियाः ॥ ५३ ॥
नियन्त्रिता यद्रणितिस्तद्गुणोदीरणादियं ।

अतिप्रसङ्गभङ्गात् तन्नैयत्तावाप्तिमः पुनः ॥५४॥
तस्य त्रिभुवनस्वामिप्रासादारम्भकर्मणि ।
चर्मकृत् कोऽपि न प्रादात् कुटीं क्षेत्रोपयोगिनीं ॥५५॥
शश्वत्प्रतिश्रुतार्थानां नव कर्माधिकारिणां ।
नैसर्गिकग्रहग्रस्तः सूत्रपातं न चक्षमे ॥५६॥
विज्ञापितोऽथ तैरेत्य तमर्थं पृथिवीपतिः ।
तानेव सागसो मेने चर्मकारं न तं पुनः ॥५७॥
सोऽभ्यधात् तान् धिगेतेषामप्रेक्षापूर्वकारितां ।
प्रागेव यैरपृष्ट्वा तं प्रविष्टं नवकर्मणि ॥५८॥
नियम्यतां विनिर्माणं यद्वान्यत्र विधीयतां ।
परभूम्यपहारेण सुकृतं कः कलङ्कयेत् ॥५९॥
ये द्रष्टारः सदसतां ते धर्मविगुणाः क्रियाः ।
वयमेव विदध्मश्चेद्यातु न्यायेन कोऽध्वना ॥६०॥
इत्युक्तवति भूपाले प्रेषितो मन्त्रिपर्षदा ।
पार्श्वात् पादूकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत् ॥६१॥
इच्छति स्वामिनं द्रष्टुं स च ब्रूते न चेन्मम ।
युक्तः प्रवेश आस्थाने वाह्यालयावसरेऽस्तु तत् ॥६२॥
अन्येद्युरथ भूपेन स वहिर्दत्तदर्शनः ।
पुण्यकर्मणि नो विघ्नः किं त्वमेवेत्यपृच्छत ॥६३॥

प्रतिभाति गृहं तच्चेद्रम्यं तव ततोऽधिकं ।
तदर्थ्यतां धनं वापि भूर्येवं चाभ्यधीयत ॥ ६४ ॥
तूष्णीं स्थितं ततो भूपं चर्मकारो व्यजिज्ञपत् ।
दन्तांशुसूत्रैस्तत्सद्मानं ज्ञातुमिवोद्यतः ॥ ६५ ॥
राजन् विज्ञाप्यते कश्चिद्यदस्माभिर्यथाशयं ।
न स्थेयमवलिप्तेन तत्र दृष्ट्वा सता त्वया ॥ ६६ ॥
नाल्पमूनः शुनो नास्ति काकुत्स्थात् पार्थिवः पृथुः ।
क्षुभ्यन्तीवाद्य तत्सभ्याः संलापेऽस्मिन् किमावयोः ॥ ६७ ॥
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः ।
अहन्ताममताख्याभ्यां शङ्कुभ्यामेव बध्यते ॥ ६८ ॥
कङ्कणाङ्गदहारादिशोभिनां भवतां यथा ।
निष्किञ्चनानामस्माकं स्वदेहेऽहंक्रिया तथा ॥ ६९ ॥
देवस्य राजधान्येषा यादृशी सौधहासिनी ।
कुटीघटमुखानद्धतमोरिस्तादृशी मम ॥ ७० ॥
आजन्मना साक्षिणीयं मातेव सुखदुःखयोः ।
मठिका लोठ्यमानाद्य नेक्षितुं क्षम्यते मया ॥ ७१ ॥
नृणां यद्वेश्महरणे दुःखमाख्यातुमीश्वरः ।
तद्विमानच्युतोऽमर्त्यो राज्यभ्रष्टोऽथ पार्थिवः ॥ ७२ ॥
एवमप्येत्य मद्वेश्म सा चेद्देवेन याच्यते ।

सदाचारानुरोधेन दातुं तदुचितं मम ॥ ७३ ॥
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदं ।
कुटीं जग्राह वित्तेन नाभिमानः शुभार्थिनां ॥ ७४ ॥
अवोचच्चर्मकारस्तं तत्र सव्यञ्जिताञ्जलिः ।
राजन् धर्म्यानुरोधेन परवत्ता तवोचिता ॥ ७५ ॥
अविग्रहेण धर्मेण पाण्डुसूनोः पुरा यथा ।
धार्मिकत्वं तथा तेऽद्य मया स्पृश्येन वीक्षितं ॥ ७६ ॥
स्वस्ति तुभ्यं चिरं स्थेया धर्म्या वृत्तान्तपद्धतीः ।
दर्शयन्नीदृशीः शुद्धाः श्रद्धेया धर्मचारिणां ॥ ७७ ॥
एवं निष्कल्मषाचारः स चक्रे पावनीं भुवं ।
राजा त्रिभुवनस्वामिकेशवस्य प्रतिष्ठया ॥ ७८ ॥
कृत्यैः प्रकाशदेव्याख्या प्रकाशाकाशकान्तिभिः ।
प्रकाशिका विहारस्य तत्पत्नी कारयित्र्यभूत् ॥ ७९ ॥
गुरुर्मिहिरदत्ताख्यस्तस्योदात्तगुणोऽभवत् ।
नारायणस्य गम्भीरस्वामिनाम्नो विधायकः ॥ ८० ॥
सर्वाधिकरणास्थैर्योच्छेत्ता च्छलितकाभिधः ।
नगराधिकृतस्तस्य छलितस्वामिनं व्यधात् ॥ ८१ ॥
कदाचन सभासीनं पृष्टा धर्माधिकारिभिः
प्रायोपविष्टा राजानं ब्राह्मणी काचिदब्रवीत् ॥ ८२ ॥

त्वयि प्रशासति महीमहो गर्हानिवर्हणे ।
सुखसुप्तस्य मे पत्युर्हृतं केनापि जीवितं ॥ ८३ ॥
एषैव महती लज्जा सदाचारस्य भूपतेः ।
यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः ॥ ८४ ॥
कलिकालबलात् तच्चेत् त्वादृशैरपि दृश्यते ।
पापात् पापतरे ऽमुष्मिन् दोषे कथमुदास्यते ॥ ८५ ॥
चिन्तयन्त्यपि नावैमि भर्तुः कश्चिद्विरोधिनं ।
निर्दोषस्य हि तस्यासन् सर्वतः शीतला दिशः ॥ ८६ ॥
अनसूयो ऽनहंकारः प्रियवाग्गुणवत्सलः ।
पूर्वाभिभाषी निर्लोभो न विद्वेषो हि कस्यचित् ॥ ८७ ॥
तस्य तुल्यवया बाल्यात् प्रभृत्यध्ययने ऽधमः ।
मान्त्रिकस्वामिवास्तव्यो विप्रः शंक्यो ऽभिचारवित् ॥ ८८ ॥
गुणादारिद्र्यनिर्निद्रैः क्षुद्रैः कौशलशालिनां ।
प्रसिद्धिस्पर्द्धया बन्धैर्वाध्यन्ते ऽसूययासवः ॥ ८९ ॥
नापुंश्चलीयो दुःशीलो नाद्रोहो मित्यशङ्कितः ।
नावाचालो मृषाभाषी नाकायस्थः कृतघ्नधीः ॥ ९० ॥
नादातृगृह्यो लुब्धो नानीर्ष्यो नित्यदुःखितः ।
नास्त्रीजितः सर्वहास्यो नावृद्धः स्निग्धभाषितः ॥ ९१ ॥
नानन्यजः पितृद्वेषी नारागी निरपत्रपः ।

नान्नुद्गविघ्यः पापीयानिति भूतार्थसंग्रहः ॥ ९२ ॥ तिलकं॥
इत्युक्तवत्यां ब्राह्मण्यां तच्छङ्कावसति द्विजे ।
आनीय परिशुध्यस्वेत्यभ्यधाद्वसुधाधिपः ॥ ९३ ॥
भूयो ब्राह्मण्यवादीत् तं ध्यातः ध्यातोद्विघ्नया ।
निःसंभ्रमः स्तम्भयितुं देव दिव्यक्रियामयं ॥ ९४ ॥
स्नायद्वक्र इवावादीत् ततस्तां मेदिनीपतिः ।
अदृष्टदोषे किं कुर्मो वयमत्राधिकारिणः ॥ ९५ ॥
नान्यस्मिन्नपि दण्डस्य प्रसङ्गोऽनिश्चितागसि ।
किं पुनर्ब्राह्मणो दण्ड्यो यो दोषेऽपि बधं विना ॥ ९६ ॥
उक्तेति विरते तस्मिन् द्विजजायाब्रवीत् पुनः ।
चतस्रः क्षणादाः क्षीणा राजन्ननशनस्मने ॥ ९७ ॥
नान्वगां परिणेतारं कृन्तुः प्रतिचिकीर्षया ।
तत्राविहितदण्डेऽस्मिंस्त्यजाम्यनशनैरसून् ॥ ९८ ॥
तथा स्थितायां ब्राह्मण्यां कृतप्रायोपवेशनः ।
स्वयं त्रिभुवनस्वामिपादानुद्दिश्य सोऽभवत् ॥ ९९ ॥
त्रिरात्रोपोषितं तत्र राजानं रजनीक्षये ।
स्वप्ने स्वप्नोत्तमोऽवोचत् सत्योक्तिं सत्यवाहनः ॥१००॥
ईदृङ् पुरुष्यते राजन् सत्यस्यान्वेषणं कलौ ।
निशीथे कस्य सामर्थ्यं कर्तुं दिवि विकर्त्तनं ॥ १०१ ॥

भवच्छन्दानुरोधेन सकृदेतत् प्रवर्तते ।
मत्प्रासादाङ्गनेऽमुष्मिन् शालिचूर्णे विकीर्यतां ॥ १०२ ॥
प्रदक्षिणं कुर्वतोऽस्य त्रिरत्र यदि दृश्यते ।
ब्रह्महत्यापादमुद्रा पादमुद्रानुयायिनी ॥ १०३ ॥
तदेष बधको भूत्वा सदृशं दण्डमर्हति ।
रात्रावेष विधिः कार्यो दिने पापकृदर्यमा ॥ १०४ ॥
अथ तत्कारयित्वा स दृष्टदोषे द्विजन्मनि ।
दण्डं दण्डधरश्चक्रे द्विजत्वाद्वधवर्जितं ॥ १०५ ॥
मक्षीमघोना भर्तृघ्ने तस्मिन् विहितशासने ।
ततो द्विजन्मजाया सा कृताशीरभ्यधादिदं ॥ १०६ ॥
इयत्यवनिभृत्सर्गे गूढपापानुशासनं ।
कार्तवीर्यस्य वा दृष्टं तव वा पृथिवीपते ॥ १०७ ॥
दण्डधारे त्वयि क्ष्माप क्षितिमेतां प्रशासति ।
को वैरस्रेक्रयोः पारमनासाद्यावसीदति ॥ १०८ ॥
इत्थं कृतयुगध्येयैर्धर्म्यवृत्तान्तवस्तुभिः ।
स्वल्पोऽपि राज्यकालोऽस्य पर्याप्तिः पर्यपूर्यत ॥ १०९ ॥
स्रष्टुर्विष्टरपाथोजसंसर्गेण निरर्गलः ।
निविडं जडिमा जाने व्यधत्त धियि सन्निधिं ॥ ११० ॥
विभक्तवर्णशोभस्य तस्यासावन्यथा कथं ।

माहेन्द्रस्येव धनुषो विदधे दृष्टनष्टतां ॥ १११ ॥
कारयित्वाभिचारं तं निग्रहोग्ररुषं द्विजं ।
तं यशःशेषतामीशं तारापीडोऽनुजो ऽनयत् ॥ ११२ ॥
दुष्कर्मदुर्भगान् भोक्तुं भोगान् पापा गुणोन्नतं ।
मृद्नन्ति कण्ठकान् प्राप्तं करभा इव केतकं ॥ ११३ ॥
ततः प्रभृति भूपानां राज्येच्छूनां गुरून् प्रति ।
दुष्टाः प्रवृत्ता राज्येऽस्मिन्नभिचारादिकाः क्रियाः ॥ ११४ ॥
श्रीचन्द्रापीडदेवस्य तत्तन्नमित्वमपश्चिमं ।
संस्मर्यमाणं कुरुते न कस्योत्पुलकं वपुः ॥ ११५ ॥
मुमूर्षुर्यत् स लब्धापि तं कृत्याध्यायिनं द्विजं ।
वराकेऽन्यप्रयुक्तेऽस्मिन् को दोष इति नाबधीत् ॥ ११६ ॥
विस्मृतः स कृतक्ष्माभृत्पंक्तिमध्येऽद्य वेधसा ।
दत्वा कार्यपदं न्यूनं न्यस्तः कलिनृपावलौ ॥ ११७ ॥
अष्टौ वर्षान् साष्टमासाननुगृह्योति मेदिनीं ।
प्रविवेश वशी स्वर्गमनिशं च सतां मनः ॥ ११८ ॥
भ्रातृद्रोहास्रसुहृदा प्रतापेन भयावहः ।
उवाह तारापीडः स चण्डः क्ष्मामण्डलं तलः ॥ ११९ ॥
पूर्णपात्रप्रतिभटं द्विषां लुण्ठयता यशः
शिशोः प्रतापस्योत्पत्तौ कबन्धा येन नर्तिताः ॥ १२० ॥

पूर्वं विपन्नतनयेऽभिजनस्य शेषे गोनन्दसन्ततिरजायत
तत्र शान्ता ।
प्राग्दन्तिभुग्ननलिनाऽथ कठप्रविष्टतोयौघपाटितविसा
नलिनीव दीना ॥ ५२७ ॥

अथ शिथिलितमुख्यामात्यैर्विमत्यविघ्नैः
कनकघटविमुक्तैः पावनैस्तीर्थतोयैः ।
कथमपि स कृतघ्नो राजजामातुरूचैर्व्यधित
विधिवदिष्टं मूर्ध्नि राज्याभिषेकं ॥ ५२८ ॥

कर्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणाद्योतश्रेणि-
फणाङ्कुराङ्कितबृहद्वाङ्कुर्मक्षीमुद्वहन् ।
ज्ञातिप्रीतिसतोषशेषफणाभृत्संफुल्लकृत्यपल्लव-
न्यासावर्तकल्हाटकाब्जपटलस्रग्धामशोभोऽभवत् ॥ ५२९ ॥

अथ विगलिता गोनन्दोर्वीभुजोऽभिजनाः शुचेरतिशुचिनि
भूः कर्कोटाह्वे कुले व्यधित स्थितिं ।
चिरपरिचितात् स्वर्गाभोगाध्वनः पतनं श्रिता
त्रिभुवनगुरोः शर्भोर्मौलाविवामरनिम्नगा ॥ ५३० ॥

राजान्। १० आदितः ५३ ग्रन्थाः । ५२५

इतिश्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य
कृतौ राजतरङ्गिण्यां तृतीयस्तरङ्गः समाप्तः ।

## ॥ अथ चतुर्थस्तरङ्गः ॥

तद्वीतव्यतिरेकमङ्गलनयादेकेन मिश्रीभवन्
निष्प्रत्यूहमिदं व्यपोहतु वपुः स्थाणोरभद्राणि वः ।
वेण्या भोगिबधूशरीरकुटिलश्यामत्विषा वेष्टिता
चूडाग्रेऽपि यत्र भाति दयिता मूर्त्यैव पृक्ता तनुः ॥ १ ॥
स मल्लीं राजकन्यां च प्राप्तवानेकतः कुलात् ।
रत्नानां च सुतानां च राजाभूद्भाजनं शनैः ॥ २ ॥
पत्युर्गोपितदौःशील्यात् तुल्यसौभाग्यगौरवा ।
अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ॥ ३ ॥
शिशुरेवायुषोऽल्पत्वं दैवज्ञोक्तं विचिन्तयन् ।
राज्ञः सुतो मल्लणाख्यो मल्लणस्वामिनं व्यधात् ॥ ४ ॥
पारे विशोककोटाद्रौ प्रदत्तप्रतिपत्तिना ।
अदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा ॥ ५ ॥
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिं ।
षट्त्रिंशता स वर्षाणां क्ष्मावृषोऽस्तमुपाययौ ॥ ६ ॥
अनङ्गदेव्यां संभूतस्तस्य दुर्लभकः सुतः ।
शशास वासवसमस्ततो वसुमतीं कृती ॥ ७ ॥

भवच्छक्त्यनुरोधेन सकृदेतत् प्रवर्त्तते ।
मत्प्रासादाङ्गनेऽमुष्मिन् शालिचूर्णं विकीर्य्यतां ॥ १०२ ॥
प्रदक्षिणं कुर्वतोऽस्य त्रिरत्र यदि दृश्यते ।
ब्रह्महत्यापादमुद्रा पादमुद्रानुयायिनी ॥ १०३ ॥
तदेष बधको भूत्वा सदृशं दण्डमर्हति ।
रात्रावेष विधिः कार्य्यो दिने पापकृदर्यमा ॥ १०४ ॥
अथ तत्कारयित्वा स दृष्टदोषे द्विजन्मनि ।
दण्डं दण्डधरश्चक्रे द्विजत्वाद्वधवर्ज्जितं ॥ १०५ ॥
मह्रीमघोना भर्तृघ्ने तस्मिन् विहितशासने ।
ततो द्विजन्मजाया सा कृताशीरभ्यधादिदं ॥ १०६ ॥
इयत्यवनिभृत्सर्गे गूढपापानुशासनं ।
कार्त्तवीर्य्यस्य वा दृष्टं तव वा पृथिवीपते ॥ १०७ ॥
दण्डधारे त्वयि क्ष्माप क्षितिमेतां प्रशासति ।
को वैरस्तेक्ष्योः पारमनासाद्यावसीदति ॥ १०८ ॥
इत्थं कृतयुगध्येयैर्धर्म्यवृत्तान्तवस्तुभिः ।
स्वल्पोऽपि राज्यकालोऽस्य पर्य्याप्तैः पर्यपूर्यत ॥ १०९ ॥
स्रष्टुर्विष्टरपाथोजसंसर्गेण निरर्गलः ।
निविडं जडिमा जाने व्यधत्त धियि सन्निधिं ॥ ११० ॥
विभक्तवर्णशोभस्य तस्यासावन्यथा कथं ।

माहेन्द्रस्येव धनुषो विदधे दृष्टनष्टतां ॥ १११ ॥
कारयित्वाभिचारं तं निग्रहोग्ररुषं द्विजं ।
तं यशःशेषतामीशं तारापीडोऽनुजो ऽनयत् ॥ ११२ ॥
दुष्कर्मदुर्भगान् भोक्तुं भोगान् पापा गुणोन्नतं ।
मृद्गन्ति कण्टकान् प्राप्तं करभा इव केतकं ॥ ११३ ॥
ततः प्रभृति भूपानां राज्येच्छूनां गुरून् प्रति ।
दृष्टाः प्रवृत्ता राज्येऽस्मिन्नभिचारादिकाः क्रियाः ॥ ११४ ॥
श्रीचन्द्रापीडदेवस्य तत्सत्त्वमिवमपश्चिमं ।
संस्मर्यमाणं कुरुते न कस्योत्पुलकं वपुः ॥ ११५ ॥
मुमूर्षुर्यत् स लब्धापि तं कृत्याध्यायिनं द्विजं ।
वराकेऽन्यप्रयुक्तेऽस्मिन् को दोष इति नाबधीत् ॥ ११६ ॥
विस्मृतः स कृतक्ष्माभृत्पङ्क्तिमध्येऽद्य वेधसा ।
दत्वा कार्यपदं न्यूनं न्यस्तः कलिनृपावलौ ॥ ११७ ॥
अष्टौ वर्षान् साष्टमासाननुगृह्येति मेदिनीं ।
प्रविवेश वशी स्वर्गमनिशं च सतां मनः ॥ ११८ ॥
आतृद्रोहास्त्रसुहृदा प्रतापेन भयावहः ।
उवाह तारापीडः स चण्डः क्ष्मामण्डलं ततः ॥ ११९ ॥
पूर्णपात्रप्रतिभटं द्विषां लुण्ठयता यशः
शिशोः प्रतापस्योत्पत्तौ कबन्धा येन नर्तिताः ॥ १२० ॥

तस्यातिदुष्टदृष्टस्य लक्ष्मीर्दीप्तापि सर्वतः ।
अभूदुद्वेगजननी श्मशानाग्नेरिव द्युतिः ॥ १२१ ॥
मन्त्रैः प्रभावसान्निध्यं देवानां क्रियते द्विजैः ।
मत्वेति देवद्वेषी स द्विजानां दण्डमत्यजत् ॥ १२२ ॥
मासं षड्भिर्दिनैरूनं वत्सरांश्च समा भुवि ।
स प्राभवद्गुरुद्रोहप्रोद्भूतासुकृतात्ययः ॥ १२३ ॥
अथारूढाभिचारेण विहितायुःक्षयो द्विजैः ।
स भ्रातृसदृशीं शान्तिं प्रपेदे न पुनर्गतिं ॥ १२४ ॥
योऽयं पराभवकराय सृजत्युपायं
तेनैव तस्य नियमेन भवेद्विनाशः ।
धूमं प्रसौति नयनान्धकरं य योऽग्निर्भूत्वाम्बुदः
स शमयेत् सलिलैस्तमेव ॥ १२५ ॥
राजा श्रीललितादित्यः सार्वभौमस्ततोऽभवत् ।
प्रादेशिकेश्वरस्रष्टुर्विधेर्बुद्धेरगोचरः ॥ १२६ ॥
प्रतापांशुच्छटाकूटैः पटवाससधर्मभिः ।
जम्बुद्वीपद्विपेन्द्रस्य येनालन्क्रियत मण्डकं ॥ १२७ ॥
नयाञ्जलिषु बद्धेषु राजभिर्विजयोद्यमे ।
पार्थिवः पृथुविक्रान्तिर्युधि क्रोधं मुमोच यः ॥ १२८ ॥
विनिःसरङ्गजातया भयाद्गर्भाविकामुपम् ।

द्विषां वसतयो यस्य निशम्यास्कन्ददुन्दुभिं ॥ १२९ ॥
विलोलतिलकान्तैर्यः सनेत्राम्भोभिराननैः ।
निवापाञ्जलिदानानि द्विषां नारीरकारयत् ॥ १३० ॥
क्षितिं प्रदक्षिणायन्तो रवेरिव महीपतेः ।
जिगीषोः प्रायशस्तस्य यात्रास्वेव वयो ययौ ॥ १३१ ॥
करं पूर्वदिशो गृह्णन् प्रतापानलसन्निधौ ।
असर्वेष्यां महाराजः स्वकीर्त्युषाविभृद्वभौ ॥ १३२ ॥
कन्यानां यत्र कुब्जत्वं व्यधात्राधिपुरे मरुत् ।
तत्रैव शंसनीयः स पुंसां चक्रे भयस्पृशां ॥ १३३ ॥
यशोवर्माद्रिवाहिन्याः क्षणात् कुर्वन् विशोषणं ।
नृपतिर्ललितादित्यः प्रतापादित्यतां ययौ ॥ १३४ ॥
मतिमान् कान्यकुब्जेन्द्रः प्रत्यभात् कृत्यवेदिनां ।
दीप्तं यल्ललितादित्यं पृष्ठं दत्वा न्यषेवत ॥ १३५ ॥
तत्सहायास्ततोऽभ्यासन् निकाममभिमानिनः ।
कुसुमाकरतोऽप्युच्चैः सुरभिश्चन्दनानिलः ॥ १३६ ॥
श्रीयशोवर्मणः सन्धौ सान्धिविग्रहिकोऽभवत् ।
नयं मियमनालोच्य मित्रशर्मास्य वल्लभे ॥ १३७ ॥
सोऽभूत् सन्धिर्यशोवर्मललितादित्ययोरिति ।
लिखितेनादिमिर्देशादनर्घत्वं विदन् प्रभोः ॥ १३८ ॥ युगलकं ॥

सुदीर्घविग्रहाशान्तैः सेनानीभिरसूचितां ।
औचित्यापेक्षितां तस्य क्षितिभृद्धक्रमन्यत ॥ १३९ ॥

. . . . . . . . . . . . . . . . . . . . . . . . . . . .

प्रीतः पञ्चमहाशब्दभाजनं तं व्यधत्त सः ।
यशोवर्मनृपं तं च समूलमुदपाटयत् ॥ १४० ॥
अष्टादशानामुपरि प्राक्सिद्धानां तदुद्भवैः ।
कर्मस्थानैः स्थितिः प्राप्ता ततः प्रभृति पञ्चभिः ॥ १४१ ॥
महाप्रतीहारपीडा स महासन्धिविग्रहः ।
महाश्वशालापि महाभाण्डागारश्च पञ्चमः ॥ १४२ ॥
महासाधनभागश्चेत्येता यैरभिधाः श्रिताः ।
शाहिमुख्या येष्वभवन्नध्यक्षाः पृथिवीभुजः ॥ १४३ ॥
कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दितां ॥ १४४ ॥
किमन्यत् कान्यकुब्जोर्वी यमुनापारतोऽस्य सा ।
अभूदाकालिकातीरं गृहप्राङ्गनवद्वशे ॥ १४५ ॥
यशोवर्माणमुल्लंघ्य हिमाद्रिमिव जाह्नवी ।
सुखेन प्राविशत् तस्य वाहिनी पूर्वसागरं ॥ १४६ ॥
पश्यद्भिर्जन्मवसुधां सेर्ष्याधोरणभर्त्सितैः ।
तन्मातङ्गैः कलिङ्गेभ्यः कथञ्चित् प्रस्थितं पथि ॥ १४७ ॥

आकृष्टलक्ष्मीपर्यङ्कदन्तिसख्यादिवागताः ।
अशिश्रयंस्तं निःशेषादन्तिनो गौडमण्डलात् ॥ १४८ ॥
कटकेभघटाहस्तकृतवीचिकचग्रहः ।
अदृश्यताग्रगैस्तस्य गृहीतः पूर्ववारिधिः ॥ १४९ ॥
वनराजिश्यामलेन दिशं वैवस्वताङ्किताम् ।
स प्रतस्थेऽब्धितीरेण तत्कृपाणेन तु द्विषः ॥ १५० ॥
तस्योद्दजूटाः कर्णाटाः कृतप्रणतयोऽनयन् ।
सुवर्णकेतकीस्त्यक्ता प्रतापमवतंसताम् ॥ १५१ ॥
तस्मिन् प्रसङ्गे रट्टाख्या कर्णाटी चटुलेक्षणा ।
अपासीन्नृपतिर्भूत्वा पृथुश्रीर्दक्षिणापथम् ॥ १५२ ॥
विन्ध्याद्रिमार्गाः पर्याप्ता निष्पर्यन्तप्रभावया ।
दुर्गयेव तया देव्या कृता निहतकण्टकाः ॥ १५३ ॥
ललितादित्यपादाब्जनखदर्पणमण्डले ।
स्वमूर्तिं वीक्ष्य संक्रान्तां प्रणता सापि पिप्रिये ॥ १५४ ॥
तालीतरुतलाचान्तनारिकेलरसोर्मयः ।
कावेरीतीरपवनैस्तद्योधाः क्लममत्यजन् ॥ १५५ ॥
चन्दनाद्रेस्तदास्कन्दत्रासभ्रश्यदहिच्छलात् ।
श्रीखण्डद्रुमदोःषण्डा मण्डलाग्रा इवापतन् ॥ १५६ ॥
उत्तराश्मस्विव पदं क्षिप्ता द्वीपेष्वविघ्नतः ।

स कुल्यायां इवाम्भोधेः क्षिप्रं चक्रे गतागतं ॥ १५७॥
ततोऽब्धिवीचिनिर्घोषैरुद्गीतजयमङ्गलः ।
प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ॥ १५८॥
आक्रम्य क्रमुकान् सप्त कोङ्कणान् सप्त तापयन् ।
तुरगानिव तिग्मांशुः प्रतापस्तस्य पप्रथे ॥ १५९॥
पश्चिमाब्धेर्मरुद्ध्वस्तवीचेराविर्भवन्त्यभूत् ।
द्वारका तस्य सैन्यानां प्रवेशोत्सुक्यदायिनी ॥ १६०॥
विन्ध्याद्रिस्तद्बलक्षुण्णधातुरेणुवृताम्बरः ।
प्रत्यभात् त्यक्तमर्यादः कोपताम्र इवोन्नमन् ॥ १६१॥
विशतां दशनश्रेण्यस्तस्यावन्तिषु दन्तिनं ।
महाकालकिरीटेन्दुज्योत्स्नया क्षपिताः परं ॥ १६२॥
सर्वतो दिशमालोक्य जितप्रायांस्ततो नृपान् ।
स प्राविशत् सुविस्तीर्णजयपथेनोत्तरापथं ॥ १६३॥
राजभिस्तस्य तन्नाग्रैः संग्रामोऽभूत् पदे पदे ।
कुलाद्रिभिरिवेन्द्रस्य पक्षच्छेदोद्यमस्पृशः ॥ १६४॥
काम्बोजानां वाजिशाला जाघ्नसे स्म हयोज्झिताः
ध्वान्तच्छलात् तद्विरुद्धैर्निरुद्धा महिषैरिव ॥ १६५॥
भूःखाराः शिखराक्षेपाविर्भ्रान्तः तस्यदस्य वाजिनः ।
कुण्ठभावं तदुत्कण्ठा मिन्युर्दृष्ट्वा हयाननान् ॥ १६६॥

त्रीन् वारान् समरे जित्वा जितं मेने स दुस्सलिं ।
सकृज्जयमरेर्वीरा मन्यन्ते हि मुधाजयं ॥ १६७ ॥
चिन्ता न दृष्टा भोट्टानां वक्त्रे प्रकृतिपाण्डुरे ।
वनौकसामिव क्रोधः स्वभावकपिले मुखे ॥ १६८ ॥
तस्य प्रतापो दरदां न सेहेऽमारुतं मधु ।
दरीणामोषधिज्योतिः प्रत्यूषेऽर्क इवोदितः ॥ १६९ ॥
कस्तूरीमृगसंस्पर्शी धूतकुङ्कुमकेसरः ।
सैन्यसीमन्तिनीस्तस्य संचस्कारोत्तरानिलः ॥ १७० ॥
शून्ये प्राग्ज्योतिषपुरे निर्जिहानं ददर्श सः ।
धूपधूमं वनप्लुष्टात् कालागुरुवनात् परं ॥ १७१ ॥
मरीचिकाविकीर्णार्णोविभ्रमे वालुकाम्बुधौ ।
तरङ्गेन्द्रा महाग्राहसमूहसमतां ययुः ॥ १७२ ॥
तद्योधान् विगलद्दर्पान् स्त्रीराज्ये स्त्रीजनोऽकरोत् ।
तुङ्गौ स्तनौ पुरस्कृत्य न तु कुम्भौ कराटिनां ॥ १७३ ॥
स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियां ।
संत्रासमभिलाषं वा निश्चिकाय न कश्चन ॥ १७४ ॥
उत्तरान्कुरवोऽविशंस्तद्भयात्कल्पपादपान् ।
उरगान्तकसंत्रासाद्विलानीव महोरगाः ॥ १७५ ॥
जयार्जितधनः सोऽथ प्रविवेश स्वमण्डलं ।

भवच्छन्दानुरोधेन सकृदेतत् प्रवर्तते ।
मत्प्रासादाङ्गनेऽमुष्मिन् शालिचूर्णं विकीर्यतां ॥१०२॥
प्रदक्षिणं कुर्वतोऽस्य त्रिरत्र यदि दृश्यते ।
ब्रह्महत्यापादमुद्रा पादमुद्रानुयायिनी ॥१०३॥
तदेष बधको भूत्वा सदृशं दण्डमर्हति ।
रात्रावेष विधिः कार्यो दिने पापकृदर्यमा ॥१०४॥
अथ तत्कारयित्वा स दृष्टदोषे द्विजन्मनि ।
दण्डं दण्डधरश्चक्रे द्विजत्वाद्बधवर्जितं ॥१०५॥
मह्वीमघोना भर्तृघ्ने तस्मिन् विहितशासने ।
ततो द्विजन्मजाया सा कृताशीरभ्यधादिदं ॥१०६॥
इयत्यवनिभृत्सर्गे गूढपापानुशासनं ।
कार्तवीर्यस्य वा दृष्टं तव वा पृथिवीपते ॥१०७॥
दण्डधारे त्वयि क्ष्माप क्षितिमेतां प्रशासति ।
को वैरस्रोतस्योः पारमनासाद्यावसीदति ॥१०८॥
इत्थं कृतयुगध्येयैर्धर्म्यवृत्तान्तवस्तुभिः ।
स्वल्पोऽपि राज्यकालोऽस्य पर्याप्तिः पर्यपूर्यत ॥१०९॥
स्रष्टुर्विष्टरपाथोजसंसर्गेण निरर्गलः ।
निविडं जडिमा जाने व्यधत्त धियि सन्निधिं ॥११०॥
विभक्तवर्णशोभस्य तस्यासावन्यथा कथं ।

मार्कण्डस्येव धनुषो विदधे दृष्टनष्टतां ॥ १११ ॥
कारयित्वाभिचारं तं निग्रहोग्ररुषं द्विजं ।
तं यशःशेषतामीशं तारापीडोऽनुजो ऽनयत् ॥ ११२ ॥
दुष्कर्मदुर्भगान् भोक्तुं भोगान् पापा गुणोन्नतं ।
मृद्गन्ति कण्टकान् प्राप्तं करभा इव केतकं ॥ ११३ ॥
ततः प्रभृति भूपानां राज्येच्छूनां गुरून् प्रति ।
दृष्टाः प्रवृत्ता राज्येऽस्मिन्नभिचारादिकाः क्रियाः ॥ ११४ ॥
श्रीचन्द्रापीडदेवस्य तत्तृत्तमिदमपश्चिमं ।
संस्मर्यमाणं कुरुते न कस्योत्पुलकं वपुः ॥ ११५ ॥
मुमूर्षुर्यत् स लब्धापि तं कृत्याध्यायिनं द्विजं ।
वराकेऽन्यप्रयुक्तेऽस्मिन् को दोष इति नाबधीत् ॥ ११६ ॥
विस्मृतः स कृतक्ष्माभृत्पंक्तिमध्येऽद्य वेधसा ।
दत्वा कार्यपदं न्यूनं न्यस्तः कलिनृपावलौ ॥ ११७ ॥
अष्टौ वर्षान् साष्टमासाननुगृह्योति मेदिनीं ।
प्रविवेश वशी स्वर्गमनिशं च सतां मनः ॥ ११८ ॥
भ्रातृद्रोहात्ससुहृदा प्रतापेन भयावहः ।
उवाह तारापीडः स चण्डः क्ष्मामण्डलं ततः ॥ ११९ ॥
पूर्णपात्रप्रतिभटं द्विषां लुण्ठयता यशः
शिशोः प्रतापस्योत्पत्तौ कबन्धा येन नर्तिताः ॥ १२० ॥

लिप्तोरत्नाकरस्यापि मुक्ताज्योतिर्भरैरिव ॥ १९५ ॥
नाभीनलिनकिञ्जल्कपुञ्जेनेवानुरञ्जितः ।
अचकात् काञ्चनमयः श्रीमुक्ताकेशवो हरिः ॥ १९६ ॥
महावराहः शुशुभे काञ्चनं कवचं दधत् ।
पाताले तिमिरं हन्तुं वह्निमिव रविप्रभाः ॥ १९७ ॥
गोवर्द्धनधरो देवो राजतस्तेन कारितः ।
यो गोकुलपयःपूरैरिव पाण्डुरतां दधे ॥ १९८ ॥
चतुष्पञ्चाशतं हस्तान् रोपयित्वा महाशिलां ।
ध्वजाग्रे दितिजारातिस्तार्क्ष्यस्तेन निवेशितः ॥ १९९ ॥
चक्रे वृहच्चतुःशाला वृहच्चैत्यवृहज्जिनैः ।
राजा राजविहारं स विरजाः सततोर्जितं ॥ २०० ॥
तोलकानां सहस्राणि चतुर्भिरधिकानि सः ।
अशीतिं निदधे हेम्नो मुक्ताकेशवविग्रहे ॥ २०१ ॥
तावन्त्येव सहस्राणि पलानां राजतस्य च ।
सन्धाय शुद्धधीश्चक्रे श्रीपरीहासकेशवं ॥ २०२ ॥
रीतिप्रस्थसहस्रैस्तु तेन तावद्भिरेव सः ।
व्योमव्यापिवपुः श्रीमान् वृहद्बुद्धो व्यधीयत ॥ २०३ ॥
चतुःशालां च चैत्यं च तावता तावता व्यधात् ।
धनेनैवेति तस्यासन् पञ्च निर्म्मितयः समाः ॥ २०४ ॥

राजतान् क्वापि सौवर्णान् क्वापि देवान् विनिर्ममे ।
पार्श्वेषु मुख्यदेवानां पार्थिवो धनदोपमः ॥ २०५ ॥
कियन्ति तत्र रत्नानि ग्रामान् परिकरं तथा ।
स प्रादादिति कः शक्तः परिच्छेत्तुमियत्तया ॥ २०६ ॥
अवरोधैरमात्यैश्च सेवकैश्च नरेश्वरैः ।
तत्र प्रतिष्ठाः शतशो विहिता भुवनाद्भुताः ॥ २०७ ॥
राज्ञी कमलवत्यस्य कमलाहट्टकारिणी ।
राजतं विपुलाकारं कमलाकेशवं व्यधात् ॥ २०८ ॥
अमात्यो मित्रशर्मापि चक्रे मित्रेश्वरं हरं ।
श्रीकय्यस्वामिनं चक्रे लाटः कय्याभिधो नृपः ॥ २०९ ॥
श्रीमान् कय्यविहारोऽपि तेनैव विदधेऽद्भुतः ।
भिक्षुः सर्वज्ञमित्रोऽभूत् क्रमाद्यत्र जिनोपमः ॥ २१० ॥
तुःखारश्चङ्कुणश्चक्रे स चङ्कुणविहारकृत् ।
भूपचित्तोन्नतं स्तूपं जिनान् हेममयांस्तथा ॥ २११ ॥
ईशानदेव्या तत्पत्न्या खाताम्बु प्रतिपादितं ।
सुधारसमिव स्वच्छमारोग्याधायि रोगिणां ॥ २१२ ॥
ललितादित्यभूभर्तुर्वल्लभा चक्रमर्दिका ।
सहस्राण्योकसां सप्त तत्र चक्रपुरं व्यधात् ॥ २१३ ॥
आचार्यो भप्पटो नाम विदधे भप्पटेश्वरं ।

अन्येऽपि कर्कटेशाद्या बहवो बहुभिः कृताः ॥ २१४ ॥
अधिष्ठानान्तरेऽप्यत्र चङ्कुणेनाग्र्यमन्त्रिणा ।
स चैत्यः सुकृतोदारो विहारो निरमीयत ॥ २१५ ॥
भिषगीशानचन्द्राख्यः श्यालश्चङ्कुणमन्त्रिणः ।
विहारमकरोल्लब्ध्वा तक्षकानुग्रहाच्छ्रियं ॥ २१६ ॥
एवं हेममयीमुर्वीं स कुर्वन्नुर्वरापतिः ।
गुणैरौदार्यशौर्याद्यैर्मघवानमलंघयत् ॥ २१७ ॥
हेलयापि विनिर्यान्ती वक्त्राद्वसुमतीपतेः ।
न कदाचन तस्याज्ञा देवैरप्युदलंघ्यत ॥ २१८ ॥
तथाहि पूर्वपाथोधेस्तटे सकटको वसन् ।
आनीयन्तां कपित्थानीत्यादिदेश स जातुचित् ॥ २१९ ॥
किं कर्तव्यतयान्धेषु पुरोगेषु स्थितेष्वथ ।
उपानयत् कपित्थानि दिव्यः कोऽपि पुमान् पुरः ॥ २२० ॥
अग्रादुपायनं गृह्णन् कृतसंज्ञो श्रुवा प्रभोः ।
कस्य त्वं इति पप्रच्छ प्रतीहारः प्रसृत्य तं ॥ २२१ ॥
सोऽभ्यधात् तं कपित्थानि दत्वा राज्ञः प्रियाण्यहं ।
प्रहितोऽद्य महेन्द्रेण नन्दनोद्यानपालकः ॥ २२२ ॥
रहो महेन्द्रसंदिष्टं वक्तव्यं किञ्चिदस्ति मे ।
इति श्रुत्वा प्रतीहारः सभां चक्रे स निर्जनां ॥ २२३ ॥

ततो दिव्यः पुमानूचे शक्रस्त्वां वक्ति भूपते ।
क्षन्तव्यं पथ्यमप्येतत् सौजन्यान्निष्ठुरं वचः ॥ २२४ ॥
तुर्ये युगेऽपि भूपाल दिक्पाला अपि ते वयं ।
विभूमो यत् प्रणाम्याज्ञां श्रूयतां तत्र कारणं ॥ २२५ ॥
पुरा ग्रामे गृहस्थस्य कस्यचित् पृथुसंपदः ।
जन्मान्तरे कर्मकरो हालिकोऽभूद्भवान् किल ॥ २२६ ॥
एकदा तस्य ते ग्रीष्मे वाहयित्वा महावृषान् ।
श्रान्तस्य निर्जलेऽरण्ये क्षीणप्रायमभूदहः ॥ २२७ ॥
ततः स्वामिगृहात् क्षुत्तृट्खिन्नस्य भवतोऽन्तिकं ।
वारिकुम्भीमपूपं च गृहीत्वा कश्चिदाययौ ॥ २२८ ॥
निर्धौतपाणिपादस्त्वं भोक्तुं संप्रस्तुतस्ततः ।
विप्रं कण्ठगतप्राणमपश्यः पुरतोऽतिथिं ॥ २२९ ॥
स त्वामवोचन्मा भुङ्क्ष्व दुर्भिक्षोपहतस्य मे ।
कण्ठे यियासवः प्राणा वर्तन्ते भोजनं विना ॥ २३० ॥
वारितः पार्श्वगेनापि तस्मै त्वं प्रीतिपूर्वकं ।
पूपार्द्धं वारिकुम्भीं च प्रादाः प्रियमुदीरयन् ॥ २३१ ॥
पात्रे प्रसन्नचित्तस्य काले दानेन तेन ते ।
अखण्डितानामाज्ञानां शतमासीत् त्रिविष्टपे ॥ २३२ ॥
तेन वारिप्रदानेन वाञ्छामात्रेऽपि दर्शिते ।

स कुल्याया इवाम्भोधेः क्षिप्रं चक्रे गतागतं ॥ १५७ ॥
ततोऽब्धिवीचिनिर्घोषैरुद्गीर्णजयमङ्गलः ।
प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ॥ १५८ ॥
आक्रम्य क्रमुकान् सप्त कोङ्कणान् सप्त तापयन् ।
तुरगानिव तिग्मांशुः प्रतापस्तस्य पप्रथे ॥ १५९ ॥
पश्चिमाब्धेर्मरुद्ध्वस्तवीचेरानिर्भयस्यभूत् ।
द्वारका तस्य सैन्यानां प्रवेशोत्सुकदायिनी ॥ १६० ॥
विन्ध्याद्रिस्तटलुण्ठधातुरेणुवृताम्बरः ।
प्रत्यभात् त्यक्तमर्यादः कोपताम्र इवोन्मनन् ॥ १६१ ॥
विशतां दशनश्रेण्यस्तस्यावन्तिषु दन्तिनां ।
महाकालकिरीटेन्दुज्योत्स्नया जडिताः परं ॥ १६२ ॥
सर्वतो दिशमालोक्य जितप्रायांस्ततो नृपान् ।
स प्राविशत् सुविस्तीर्णमपथमोत्तरापथं ॥ १६३ ॥
राजभिस्तस्य तत्राग्र्यैः संग्रामोऽभूत् पदे पदे ।
कुलाद्रिभिरिवेन्द्रस्य पक्षच्छेदोन्मनस्पृशः ॥ १६४ ॥
काम्बोजानां वाजिशाला जायन्ते स्म हयोज्झिताः
ध्वान्तच्छलात् तद्विरुद्धैर्निरुद्धा महिषैरिव ॥ १६५ ॥
भूःखाराः शिखरस्पर्शप्राप्तः सक्थ्यङ्क्य वाजिनः ।
कुण्ठभावं तदुत्कण्ठां मिन्युर्दृष्ट्वा हयाननान् ॥ १६६ ॥

त्रीन् वारान् समरे जित्वा जितं मेने स दुर्जयं ।
सकृज्जयमरेर्वीरा मन्यन्ते हि तृणाकरं ॥ १६७ ॥
चिन्ता न दृष्टा भोटानां वक्त्रे प्रकृतिपाण्डुरे ।
वनौकसामिव क्रोधाः स्वभावकपिले मुखे ॥ १६८ ॥
तस्य प्रतापोदारदां न सेहे ऽम्बारतं मधु ।
दरीणामोषधिज्योतिः प्रत्यूषे ऽर्क इवोदितः ॥ १६९ ॥
कस्तूरीमृगसंस्पर्शी धूतकुङ्कुमकेसरः ।
सैन्यसीमन्तिनीस्तस्य सेवन्स्कारोत्तरानिलः ॥ १७० ॥
शून्ये प्राग्ज्योतिषपुरे निर्विघ्नं ददर्श सः ।
धूपधूमं वनप्लुष्टात् कालागुरुघनात् परं ॥ १७१ ॥
मरीचिकाविकीर्णार्णोविभ्रमे वालुकाम्बुधौ ।
तदृजेन्द्रा महाग्राहतमूहुर्मनतां वपुः ॥ १७२ ॥
तन्योधान् विकालहर्षान् स्त्रीराज्ये स्त्रीजनो ऽकरोत् ।
तुङ्गौ स्तनौ पुरस्कृत्य सानु कुम्भौ कराटिनां ॥ १७३ ॥
स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियां ।
संत्रासमभिलाषं वा निश्चिकाय न कश्चन ॥ १७४ ॥
उत्तराकुरवो ऽभिजातसङ्ग्याक्रान्तपादपाम् ।
अगान्तकसंत्रासाद्बिलान्यीव महोरगाः ॥ १७५ ॥
तयार्जितधनः सो ऽथ प्रविवेश स्वमण्डलं ।

सलिलं प्रागवस्थं च क्षणेन सरितामभूत् ॥ २५१ ॥
परिभाव्याद्भुतं तत् स प्रशंसामुखराननः ।
प्रणयाच्चङ्कुणं राजा मणियुग्ममयाचत ॥ २५२ ॥
स तमाह स्म विहसन् कर्मैतो कुतो मणी ।
योग्यौ मत्पाणिगावेव किं स्यात् स्वीकरणेन वः ॥ २५३ ॥
सामान्येष्वेव लभते सोत्कर्षं वस्तु संप्रथां ।
महत्सु तस्य का शोभा विविधोत्कृष्टवस्तुषु ॥ २५४ ॥
प्रस्यन्दनं शशिमणेर्गणयन्ति तावद्यावत्
स्थितो जलनिधेः पुलिनैकदेशे ।
स स्वीक्रियेत यदि तेन ततस्तदास्य स्यन्दः
स्फुरन्नपि न तत्सलिले विभाव्यः ॥ २५५ ॥
इत्युक्त्वा विरते तस्मिन् राजा सस्मितमब्रवीत् ।
संभावयसि किं रत्नमाभ्यामभ्यधिकं मम ॥ २५६ ॥
ततोऽधिकतरं यद्वा कोषोत्थं मम पश्यसि ।
तदादाय प्रयच्छेदं निष्क्रयेण मणिद्वयं ॥ २५७ ॥
ततो महान् प्रसादोऽयमित्युक्त्वा चङ्कुणोऽब्रवीत् ।
स्वायत्ते स्वामिनो रत्ने मह्यमिष्टं प्रदीयतां ॥ २५८ ॥
गजस्कन्धेऽधिरोप्यैतन्मागधेभ्यो यदाहृतं ।
दत्वा सुगतबिम्बं तज्जनोऽयमनुगृह्यतां ॥ २५९ ॥

सलिलोत्तरणोपायो मणी देवेन गृह्यतां ।
संसारोत्तरणोपायः सुगतो मह्यमर्प्यतां ॥ २६० ॥
इति तेनार्थितो युक्त्या जिनविम्बं ददौ नृपः ।
वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं वचः ॥ २६१ ॥
स्वविहारेऽथ भगवान् स तेन विनिवेशितः ।
कपिशाभिः सकाशाय इव यो भाति कान्तिभिः ॥ २६२ ॥
दृश्यतेऽद्यापि कटकैरायासैः परिवेष्टितः ।
गजस्कन्धनिबद्धस्य सूचको यस्य विष्टरः ॥ २६३ ॥
अभिप्रायानुसारेण प्रकटीकुरुते प्रियं ।
अहो महाप्रभावाणां भूपतीनां वसुन्धरा ॥ २६४ ॥
अशिक्षितं कदाचित् स स्वयं दमयितुं हयं ।
निनायारण्यमेकाकी हयविद्याविशारदः ॥ २६५ ॥
दूरान्निर्मानुषे तत्र ललनां ललिताकृतिं ।
एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि ॥ २६६ ॥
क्षणाच्च ते समापय्य गीतनृत्ये मृगीदृशौ ।
प्रणम्य किञ्चिद्गच्छन्त्यावपश्यद्दमयन् हयं ॥ २६७ ॥
तुरगं तं समारुह्य तत्रागच्छद्दिने दिने ।
दृष्ट्वा तथैव ते कान्ते गत्वापृच्छत् सविस्मयः ॥ २६८ ॥
तमूचतुस्ते नर्त्तक्यावावां देवगृहाश्रिते ।

यः शूर वर्द्धमानोऽयं ग्रामस्तत्राबयोर्गृहं ॥ २६९ ॥
इत्यजीवनभुजां मातृणामुपदेशतः ।
अस्मत्कुलेन नियतं नृत्यमत्र विधीयते ॥ २७० ॥
रूढिः परम्परायाता सेयमस्मद्गृहे स्थिता ।
आवामन्योऽपि वा नात्र निमित्तं ज्ञातुमीश्वरः ॥ २७१ ॥
एवं वचस्तयोः श्रुत्वा नृपोऽन्येद्युः सविस्मयः ।
तद्भक्तां मेदिनीं कृत्स्नां कारुभिर्निरदारयत् ॥ २७२ ॥
दूरं निर्खतमृद्भिस्तैरथाद्राक्षीन्निवेदितं ।
नृपतिः पिहितद्वारं जीर्णदेवगृहद्वयं ॥ २७३ ॥
उद्घाटितारैर्वर्णैः पीठोत्कीर्णैर्निवेदितौ ।
अपश्यत् केशवौ तत्र रामलक्ष्मणनिर्मितौ ॥ २७४ ॥
परिहासहरेः पार्श्वे पृथक् कृत्वा शिलागृहं ।
स रामस्वामिनः श्रीमान् प्रतिष्ठाकर्म निर्ममे ॥ २७५ ॥
देवोऽपि लक्ष्मणस्वामी तथैवाभ्यर्थ्य पार्थिवं ।
चक्रमर्दिकया चक्रेश्वरपार्श्वे निवेशितः ॥ २७६ ॥
दिग्जये पुरुषः कश्चिद्धृतप्रत्यग्रनिग्रहः ।
अग्रे न्यक्षिपदात्मानं गजारूढस्य भूभुजः ॥ २७७ ॥
तं कृत्तपाणिघ्राणादिव्रणैः शोणितवर्षिणं ।
त्राणार्थिनं कारुणिकः स्वोदन्तं पृष्टवान्नृपः ॥ २७८ ॥

स तस्मै सिकतासिन्धुसन्निधस्थस्य भूपतेः ।
प्रख्यातमूचे सचिवमात्मानं हितकारिणं ॥ २७९ ॥
प्रणातिर्ललितादित्यनृपतेः क्रियतामिति ।
हितं कथयतः स्वस्य निग्रहं च ततो नृपात् ॥ २८० ॥ कुलकं ॥
प्रतिज्ञाते च भूपेन ततस्तत्स्वामिनिग्रहः ।
रूढव्रणोऽगदङ्कारैः स चाकार्यत सत्कृतेः ॥ २८१ ॥
ततो विज्ञप्तयात्रं तं स मन्त्री कृतसत्क्रियः ।
कदाचिदेवमवदद्विजने जगतीभुजं ॥ २८२ ॥
एवंविधस्य कायस्य राजन् यत् परिरक्षणं ।
तत्र वैरविशुद्ध्याशा विडम्बयति मामियं ॥ २८३ ॥
वार्ष्पैर्जलाञ्जलिं दत्वा दुःखाय च सुखाय च ।
कृतकृत्यो ध्रुवं जह्यादस्मान्हतानसून् ॥ २८४ ॥
अपकृत्याधिकं शत्रोरपकारं जयोन्मितं ।
गम्भीरं प्रतिनद्येव निनादं नदतो गिरिः ॥ २८५ ॥
इतो मासैस्त्रिभिर्गम्या भूः प्राप्या त्वरितं कथं ।
यदा वा प्राप्यते वैरी तदा तत्रैव किं वसेत् ॥ २८६ ॥
मासार्द्धलंघ्यं पन्थानं तस्मादुपदिशामि ते ।
गृहीत्वा स जलं गम्यश्चमूनां किंतु निर्जलः ॥ २८७ ॥
तद्भूमिज्ञा बन्धवो मे न वक्ष्यन्ति त्वदागमं ।

सामात्यान्तःपुरो राजा छद्मना तेन गृह्यते ॥ २८८ ॥
इत्युक्ता सोऽकरोत् तस्य प्रवेसं वालुकार्णवे ।
पक्षे क्षीणे तु कटको निस्तोयः समपद्यत ॥ २८९ ॥
तत्राप्युक्तानि द्वित्राणि वक्त्रेवाभवन्नृपः ।
तृष्णार्त्तं वीक्ष्य सैन्यं च मन्त्रिणं तमभाषत ॥ २९० ॥
उक्तकालाधिका यावद्वासरा गमिताः पथि ।
मुमूर्षु तृष्णया सैन्यं तदध्वा शिष्यते कियान् ॥ २९१ ॥
ततो विहस्य सोऽवादीज्जिगीषतेः शेषमध्वनः ।
किं पृच्छत्यरिराष्ट्रस्य यमराष्ट्रस्य वा भवान् ॥ २९२ ॥
त्वं हि स्वामिहितायैव समुपेक्ष्य स्वजीवितं ।
मृत्युवक्त्रं सकटको मया युक्त्या प्रवेशितः ॥ २९३ ॥
नेदं मरुमहीमात्रं भीमोऽयं वालुकार्णवः ।
नाम्भोऽत्र लभते क्वापि कस्त्राता तेऽद्य भूपते ॥ २९४ ॥
श्रुत्वेति पृतना कृत्स्ना समभूद्गीतसौष्ठवा ।
करकाभ्रंशितफला स्तम्भशेषेव शालिभूः ॥ २९५ ॥
सन्त्यक्तजीविताशानां भीरूणां क्रन्दितध्वनिं ।
भुजमुद्यम्य शमयंस्ततो नृपतिरब्रवीत् ॥ २९६ ॥
अमात्य तव कृत्येन प्रीतः स्वामिहितैषिणः ।
मरावप्यत्र शीतार्त्ता इव रोमाञ्चिता वयं ॥ २९७ ॥

अभेद्यसारे मयि तु व्यक्तमेवंविधेऽपि ते ।
प्रयोगः कुण्ठतां यातो लोहं वज्रमणाविव ॥ २९८ ॥
मणिभ्रमाद्वह्निकणां गृह्णन् दग्धा इवाङ्गुलीः ।
त्वं मिथ्यावयवाल्लूनानद्य शोचिष्यसि ध्रुवं ॥ २९९ ॥
निर्देशेनैव मे पश्य पयः सूतेऽद्य मेदिनी ।
रसितेनाम्बुवाहस्य रत्नं वैदूर्यभूरिव ॥ ३०० ॥
इत्युक्त्वा सोऽम्बु निष्क्रष्टुं कुन्तेनोर्वीं व्यदारयत् ।
उज्जिहीर्षुर्वितस्तामम्भः शूलेनेव त्रिलोचनः ॥ ३०१ ॥
अथोज्जगाम पातालल्लक्ष्मीर्लीलास्मितच्छविः ।
रसातलात् सरित् साकं सैन्यानां जीविताशया ॥ ३०२ ॥
तस्य सेनाचराणां सा क्लमं चिच्छेद वाहिनी ।
कथाव्ययीकृताङ्गस्य मन्त्रिणस्तस्य चेष्टितं ॥ ३०३ ॥
लूनाङ्गो ऽमङ्गलाशंसी स मन्त्री विफलश्रमः ।
स्वस्य भर्तुर्विवेशादौ नगरीमन्तकस्ततः ॥ ३०४ ॥
राज्ञाऽपि कुटिलाचारो निगृह्य स महीपतिः ।
निजस्य मन्त्रिणस्तस्य तुल्यावस्थो व्यधीयत ॥ ३०५ ॥
यथोपयोगं तेनैव स्थाने स्थाने प्रवर्तिताः ।
अद्यापि कुन्तवाहिन्यः प्रवहन्त्युत्तरापथे ॥ ३०६ ॥
सहस्रशः संभवन्तोऽप्यपरे भुवनाद्भुताः ।

अतिप्रसङ्गभङ्गेन तद्वृत्तान्ता न दर्शिताः ॥ ३०७॥
यन्निःशब्दजला घनाश्मपरुषे देशेऽतिघोरारवा
यस्याश्छाः समये पयोदमलिने कालुष्यसन्दूषिताः ।
दृश्यन्ते कुलनिम्नगा अपि परं दिग्देशकालाविमौ
तत्सत्यं महतामपि स्वसदृशव्यापारप्रवृत्तिप्रदौ ॥ ३०८ ॥
कलेर्वायं प्रभावः स्यान्नरनाथासनस्य वा ।
यत् सोऽपि भीमकलुषाः प्रवृत्तीः समदर्शयत् ॥ ३०९ ॥ युग्मं ॥
अवरोधसखो राजा परिहासपुरे स्थितः ।
स जातु मदिराक्षीवः सचिवानेवमन्वशात् ॥ ३१० ॥
कृतं प्रवरसेनेन यदेतत् प्रवरं पुरं ।
तन्निर्दह्यथ मन्यध्वे मत्पुरस्यैव चेत्क्रियं ॥ ३११ ॥
घोरामलंघिताज्ञस्य श्रुत्वेत्याज्ञां महीपतेः ।
गत्वाशु घासकूटानि तेऽदहन् वातुलाम्भके ॥ ३१२ ॥
हर्म्याग्राद्वीक्ष्यमाणास्तद्वह्निज्वालोज्ज्वलानलः ।
उल्कामुख इवाभूत् स हर्षाद्धसितोत्कटः ॥ ३१३ ॥
द्वेषादिविकृतवतः प्रतिभासतेऽन्यो मिथ्यैव
चित्रमधिको विषदात्मनोऽपि ।
चन्द्रादि पश्यति पुरो द्विगुणां प्रकृत्या
तेजोमयं तिमिरदोषहतं हि चक्षुः ॥ ३१४ ॥

नैवं चेदेकमपि तत् पुरं प्रवरभूपतेः ।
असंख्यपुरनिर्माता स विवेदाधिकं कुतः ॥ ३१५ ॥ युग्मं ॥
क्षीणक्षैव्योऽथ निर्ध्याय नगरप्लोषकिल्बिषं ।
उष्णानिःश्वाससुहृदा पस्पर्शेऽनुशयाग्निना ॥ ३१६ ॥
तत् कुर्वतेऽन्तः सुषिरा गूढं येनातनुक्षयं ।
दह्यन्ते जीर्णतरवः कोठरस्थानला इव ॥ ३१७ ॥
प्रातस्तमथ शोचन्तं सदुःखं वीक्ष्य मन्त्रिणः ।
चिन्तानिवर्तनायोचुः पुरप्लोषं मृषैव तत् ॥ ३१८ ॥
श्रुतेऽप्रनष्टे नगरे निःशोकोऽभून्महीपतिः ।
स्वप्नान्तर्हारिते पुत्रे प्रबुद्धोऽग्र इव स्थिते ॥ ३१९ ॥
कार्यं न जातु तद्वाक्यं यत्क्षीबेण मयोच्यते ।
तान्युक्तकारिणोऽमात्यान् प्रशंसन्निति सोऽब्रवीत् ॥ ३२० ॥
प्रियमनुचितं क्ष्मापण्यस्त्रीक्षणप्रभुरीश्वरो
रमयति यतो धिक् तान् भृत्यान् स्ववृत्तिसुखार्थिनः ।
नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि
प्रसभमिह ये तैः पूतेयं महात्मभिरुर्वरी ॥ ३२१ ॥
अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः ।
अयमन्योऽपि दोषोऽभूदितरक्षितिपोचितः ॥ ३२२ ॥
दत्तापि यत् स मध्यस्थं श्रीपरीहासकेशवं ।

जघान तीक्ष्णपुरुषैस्त्रिग्राम्यां गौडपार्थिवं ॥ ३२३ ॥
गौडोपजीविनामासीत् सत्वमत्यद्भुतं तदा ।
जकुर्ये जीवितं धीराः परोक्षस्य प्रभोः कृते ॥ ३२४ ॥
शारदादर्शनमिषात् कस्मीरान् संप्रविश्य ते ।
मध्यस्थदेवावसथं संहताः समवेष्टयन् ॥ ३२५ ॥
दिगन्तरस्थे भूपाले प्रविवेक्षूनवेक्ष्य तान् ।
परिहासहरिं चक्रुः पूजकाः पिहितान्तरं ॥ ३२६ ॥
ते रामस्वामिनं प्राप्य राजतं विक्रमोर्जिताः ।
परिहासहरिं भ्रान्त्या चक्रुरुत्पाद्य रेणुशः ॥ ३२७ ॥
तिलं तिलं तं कृत्वा च चिक्षिपुर्दिक्षु सर्वतः ।
नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे ॥ ३२८ ॥
श्यामला रक्तसंसिक्तास्तेऽपतन्निहता भुवि ।
अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दोज्ज्वला इव ॥ ३२९ ॥
तदीयरुधिरासारैः समभूदुज्ज्वलीकृता ।
स्वामिभक्तिरसामान्या धन्या चेयं वसुन्धरा ॥ ३३० ॥
वज्राद्वज्रकृतं भयं विरमति श्रीः पद्मरागाद्भवेन्नानाकारमपि
प्रशाम्यति विषं गारुत्मताद्श्मनः ।
एकैकं क्रियते प्रभावनियमात् कर्माऽतिरत्नैः परं पुंरत्नैः
पुनरप्रमेयमहिमोन्नद्धैर्न किं साध्यते ॥ ३३१ ॥

क्व दीर्घकाललङ्घ्योऽध्वा शान्ते भक्तिः क्व च प्रभौ ।
विधातुरप्यसाध्यं तद्यद्द्विडिर्विहितं तदा ॥ ३३२ ॥
लोकोत्तरस्वामिभक्तिप्रभावाणि पदे पदे ।
तादृशानि तदाभूवन् भृत्यरत्नानि भूभृतां ॥ ३३३ ॥
राज्ञः प्रियो रक्षितोऽभूद्गौडसन्त्रासविप्लवे ।
रामस्वाम्युपकारेण श्रीपरीहासकेशवः ॥ ३३४ ॥
अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदं ।
ब्रह्माण्डं गौडवीराणां सनाथं यशसा पुनः ॥ ३३५ ॥
एवं नानाविधोदन्तैर्वासराः क्ष्मापतेर्ययुः ।
विरलाः स्वपुरे तस्य भूयांसस्तु दिगन्तरे ॥ ३३६ ॥
अनन्याक्रान्तपृथिवीसमालोकनकौतुकी ।
अपारं प्रविवेशाथ पुनरेवोत्तरापथं ॥ ३३७ ॥
कर्तुं प्रभावजिज्ञासां प्रहितैर्धनदादिभिः ।
नैर्ऋतैः सह वृत्तान्तास्तस्य ते ते तदाभवन् ॥ ३३८ ॥
नाद्यापि या भुवो दृष्टा जाने भानुकरैरपि ।
राज्ञस्तस्य बभूवाज्ञा तत्र स्वैरविहारिणी ॥ ३३९ ॥
चिरमज्ञातवृत्तान्तैर्मन्त्रिभिः प्रहितस्ततः ।
प्रत्यावृत्तस्तस्य पार्श्वाद्दूतस्तानेवमुक्तवान् ॥ ३४० ॥
इत्यादिशति वः स्वामी कोऽयं मोहो भवादृशां ।

क्ष्मामिमां मे प्रविष्टस्य प्रतीक्षध्वे यदागमं ॥ ३४१ ॥
नवं नवं प्रतिदिनं संत्यज्य विजयार्जनं ।
सुराष्ट्रं संप्रविष्टस्य किं कार्यं मम पश्यथ ॥ ३४२ ॥
विनिर्गतानां स्वभुवः सरितां सलिलाकरः ।
न निर्व्याजं जिगीषूणां दृश्यते ह्यवधिः क्वचित् ॥ ३४३ ॥
तस्मादाचारसारं वो वक्ष्ये स्वविषयोचितं ।
राज्यं तदनुसारेण निर्विघ्नं कुरुतानघाः ॥ ३४४ ॥
अत्रस्थैः सर्वदा रक्ष्यः स्वभेदः प्रभविष्णुभिः ।
चार्वाकाणामिवैषां हि भयं न परलोकतः ॥ ३४५ ॥
अपराधं विनाप्यत्र दण्ड्या गह्वरवासिनः ।
ते हि संभृतवित्ताः स्युर्दुर्भेद्या दुर्गसंश्रयाः ॥ ३४६ ॥
वर्षोपभोग्यान्यन्नानि क्षेत्रभूसम्मिता वृषाः ।
ग्राम्याणां नातिरिच्यन्ते यथा कार्यं तथा सकृत् ॥ ३४७ ॥
अधिकीभूतवित्ता हि वत्सरेणैव ते भृशं ।
भवेयुर्डामराः क्रूरा नृपाज्ञातिक्रमक्षमाः ॥ ३४८ ॥
वस्त्रं स्त्रियः कुथा भोज्यमलङ्कारा हया गृहाः ।
आसाद्यन्ते यदा जातु ग्रामीणैर्नगरोचिताः ॥ ३४९ ॥
मदाद्दुर्गाण्युपेक्षन्ते संरक्ष्याणि यदा नृपैः ।
यदा चानन्तरज्ञत्वं तेषां भृत्येषु दृश्यते ॥ ३५० ॥

प्रदेशादेकतो भूता यदा वृत्तिश्च शास्त्रिणां ।
अन्योन्योद्वाहसंबन्धैः कायस्थाः संकृता यदि ॥ ३५१ ॥
कर्मस्थानानि वीक्षन्ते क्ष्मापाः कायस्थवद्यदा ।
तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्ययः ॥ ३५२ ॥ चतुर्भिः कुलकं॥
चेष्टानुसारेणोन्नीय भूपमादाय संविदं ।
मयोक्तं हृदये कार्यमन्तरं राजबीजिनां ॥ ३५३ ॥
प्रत्यासत्तिं मदकरटिनो दानगन्धेन वायुर्ज्योद्भूतिं
प्रकटितरुचिश्चञ्चलेवाम्बुदस्य ।
चेष्टा स्पष्टं वदति मतिमन्नैपुणोन्नेयतत्वा
जन्तोर्जन्मान्तरपरिचितां निश्चलां चित्तवृत्तिं ॥ ३५४ ॥
पुत्रः कुवलयादित्यो वज्रादित्यश्च मे समौ ।
भिन्नशीलौ समौ भ्रात्रोर्द्वैमातुरयोः पुनः ॥ ३५५ ॥
ज्यायान् राज्येऽभिषेक्तव्यः स च स्याद्बलवान् यदा ।
तस्याज्ञातिक्रमः कार्यो भवद्भिर्नियमात् तदा ॥ ३५६ ॥
उत्सृजज्जीवितं चापि राज्यं वापि स पार्थिवः ।
शोचनीयो न केनापि स्मरतेदं वचो मम ॥ ३५७ ॥
कार्यः कनीयान् न नृपः प्रमादात् क्रियते यदि ।
नोल्लंघनीया तस्याज्ञा रूक्षश्च विषमोऽपि सः ॥ ३५८ ॥
पौत्रेषु मे कनीयान् यो जयापीडोऽस्ति दारकः ।

पितामहसमो भूयो इति वाच्यः स सर्वदा ॥ ३५९ ॥
भर्तुर्गृहीतनैराश्याः साभिप्रायाः प्रणम्य तां ।
आनर्चुः पश्चिमामाज्ञां ते वाष्पार्घकणात्यजः ॥ ३६० ॥
उवाच चङ्कुणो जातु सन्निपत्याखिलाः प्रजाः ।
वाष्पैः पतिवियोगाग्नितप्तां सिञ्चन् वसुन्धरां ॥ ३६१ ॥
राज्ये कुवलयापीडो राजपुत्रोऽभिषिच्यतां ।
सुगृहीताभिधो राजा गतः स सुकृती दिवं ॥ ३६२ ॥
ससृजे यस्य कृतिनो दैवतैः कोषवृद्धये ।
रससिद्धिरकस्मान्मे यस्मात् सास्तमुपागता ॥ ३६३ ॥
दूरस्थोऽपि हि भूभृत् स भाग्यशक्त्या कयाचन ।
कार्याणि घटयन्नासीद्दुर्घटान्यपि हेलया ॥ ३६४ ॥
अम्भोजानि घनाघनव्यवहितोऽप्युल्लाघयत्यंशुमान्
दूरस्थोऽपि पयोधरोऽतिशिशिरस्पर्शं करोत्यातपं ।
शक्तिः काप्यपरीक्षितास्ति महतां स्वैरं दविष्ठान्यहो
यन्माहात्म्यवशेन यान्ति घटनां कार्याणि निर्यत्नणां ॥ ३६५ ॥
सैकादशदिनान् सप्त मासान् षट्त्रिंशतं समाः ।
एवमाक्राम्य स महीं प्रजाचन्द्रोऽस्तमाययौ ॥ ३६६ ॥
तुषारवर्षैर्बहलैस्तमकाण्डनिपातिभिः ।
आर्याणकाभिधे देशे विपन्नं केचिदूचिरे ॥ ३६७ ॥

राजप्रष्ठः प्रतिष्ठां स रक्षितुं चिरसंचितां ।
सङ्कटे क्वापि दहनं प्राविक्षदिति केचन ॥ ३६८ ॥
केषांचित् तु मते भूभृद्वीयस्युत्तरापथे ।
सोऽमर्त्यसुलभां भूमिं प्रविष्टः कटकान्वितः ॥ ३६९ ॥
अत्यद्भुतानि कृत्यानि श्रुतान्यस्य यथा किल ।
विपत्तिरपि भूभर्तुस्तथैवात्यद्भुता श्रुता ॥ ३७० ॥
यातोऽस्तं द्युमणिः पयोधिसलिलं कैश्चित् प्रविष्टोऽपरैः
संप्राप्तो दहनं गतः किल परैर्लोकान्तरं कीर्त्यते ।
जायन्ते महतामहो निरुपमप्रस्थानहेवाकिनां
निःसामान्यमहत्त्वयोगपिशुना वार्त्ता विपत्तावपि ॥ ३७१ ॥
ततः कुवलयापीडो भेजे कुवलयेशतां ।
जातः कमलदेव्यां यः श्रीमान् शक्र इवादितेः ॥ ३७२ ॥
त्यागेन चक्रे विशदां योऽनुरक्तां नृपश्रियं ।
महोरगस्त्वचमिव स्वभावमलिनामपि ॥ ३७३ ॥
भ्रात्रा तुल्यप्रभावेण कञ्चित् कालं हृतप्रभः ।
स हुताशोष्मणाक्रान्तः प्रदीप इव नारुचत् ॥ ३७४ ॥
भृङ्गैरिवानुगैर्दानलोभात् पर्यायवृत्तिभिः ।
श्रीर्दुस्थाभूत् तयोरन्तर्मत्तेभकटयोरिव ॥ ३७५ ॥
अथोभयधनादायि भृत्यचक्रिकया समं ।

सुधांशोरिव दुर्वासा नूनं विसदृशोऽभवत् ॥ ३६४ ॥
परिहासपुरात् पित्र्यां नानोपकरणावलीं ।
स जहार दुराचारो भूभृल्लोभवशंवदः ॥ ३६५ ॥
रागिणो भूमिपालस्य भूयस्योऽन्तःपुरस्त्रियः ।
वीजाश्वस्येव वडवास्तास्ताः समभवन् प्रियाः ॥ ३६६ ॥
विक्रयेण प्रयच्छन् स म्लेच्छेभ्यः पुरुषान् बहून् ।
म्लेच्छोचितां व्यवहृतिं प्रावर्तयत मण्डले ॥ ३६७ ॥
सप्ताब्दान् वसुधां भुक्त्वा सोऽतिसंभोगजन्मना ।
जगाम संक्षयं क्ष्माभृत् क्षयरोगेण किल्विषी ॥ ३६८ ॥
तस्मान्मञ्जरिकादेव्या जातो राजा प्रजान्तकः ।
ततः पृथिव्यापीडोऽभूत् समासाश्चतुरः समाः ॥ ३९९ ॥
जातो मम्माभिधानायां वप्पियात् सप्त वासरान् ।
संग्रामापीडनामाथ तमुत्पाट्याभवन्नृपः ॥ ४०० ॥
भ्रातरौ तौ समासाद्य राज्यं नैव व्यराजत ।
हेमन्तशिशिरावाप्य चण्डांशोरिव मण्डलं ॥ ४०१ ॥
शान्तेऽथ संग्रामापीडे कनीयान्वप्पियात्मजः ।
राजा श्रीमान् जयापीडः प्राप राज्यं ततः क्रमात् ॥ ४०२ ॥
पितामहसमो भूयादित्यमात्यवचः स्मरन् ।
जिगीषुः संभृतबलो दिग्जयाय स निर्ययौ ॥ ४०३ ॥

स्वदेशादेव नयविद्वशं नीतैः समं नृपैः ।
वृद्धान् पप्रच्छ निर्गच्छन् कश्मीरद्वारगोचरान् ॥ ४०४ ॥
पितामहस्य नः सैन्यं कियन्निर्गच्छतोऽभवत् ।
इति ब्रूताद्य यात्रासु यूयं संख्यातसैनिकाः ॥ ४०५ ॥
कृतस्मितास्तमूचुस्ते किं प्रश्नेनामुना प्रभो ।
वस्तु कश्चिदतिक्रान्तं नानुकर्तुं क्षमोऽधुना ॥ ४०६ ॥
कर्णीरथानां तस्यासीत् सपादं लक्षमीशितुः ।
अशीतिस्तु सहस्राणि देवस्याद्य जयोद्यमे ॥ ४०७ ॥
तदाकर्ण्य जयापीडो बहु मेने न निर्जयं ।
क्षिप्रं क्षितेः संकुचन्त्याः कालस्य बलवत्तया ॥ ४०८ ॥
जिगीषोः क्ष्माभुजस्तस्य भावमालोक्य तादृशं ।
दध्युर्भावज्ञतां वृद्धा ललितादित्यभूपतेः ॥ ४०९ ॥
तस्य दूरप्रयातस्य श्यालो जज्जाभिधो बलात् ।
द्रोहेणाक्रम्य कश्मीरान् स्वयं भेजे नृपासनं ॥ ४१० ॥
दिने दिने राजसैन्यात् स्वदेशस्मारिणस्ततः ।
सैनिकाः स्वान्यवर्तन्त स्वामिभक्तिपराङ्मुखाः ॥ ४११ ॥
प्रख्यापयिष्यन् स्वामेव शक्तिं परिकरं विना ।
निश्चिकाय जयापीडो युक्तां काञ्चित् तु संविदं ॥ ४१२ ॥
अभङ्गुरास्तेऽभिमानास्तस्यैवासन् मनस्विनः ।

अत्यवर्तत येरेष वेधात्रीरपि वामता: ॥ ४१३ ॥
स विसृज्य भुवं स्वां स्वां भूपतीननुयात्रिकान् ।
प्रयागमगमत् सैन्यैः परिमेयैर्न्निजैः समं ॥ ४१४ ॥
तत्रावशिष्टान् निश्चित्य वाजिनः स मनोजवान् ।
द्विजेभ्यो लक्षमेकोनं प्रददौ भूरिदक्षिणां ॥ ४१५ ॥
संपूर्णमन्यो लक्षं यः प्रदद्यादत्र वाजिनां ।
तन्मुद्रयेयं मन्मुद्रा विनिवार्येत्युदीर्य च ॥ ४१६ ॥
श्रीजयापीडदेवस्येत्यक्षरैरुपलक्षितां ।
दिग्देशगामिनो मुद्रां गाङ्गस्य पयसो ददौ ॥ ४१७ ॥
तन्मुद्राङ्कं पयः पीत्वा गाङ्गमद्यापि निर्मलं ।
चित्ते प्रवर्द्धते तापो भूपानामभिमानिनां ॥ ४१८ ॥
स्वदेशागमनानुज्ञां सैन्यस्याप्तमुखेन सः ।
दत्वा निशायामेकाकी निर्ययौ कटकान्तरात् ॥ ४१९ ॥
मण्डलेषु नरेन्द्राणां पयोदानामिवार्यमा ।
गौडराजाश्रयं गुप्तं जयन्ताख्येन भूभुजा ॥ ४२० ॥
प्रविवेश क्रमेणाथ नगरं पौण्ड्रवर्द्धनं ।
तस्मिन् सौराज्यरम्याभिः प्रीतः पौरविभूतिभिः ॥ ४२१ ॥
लास्यं स द्रष्टुमविशत् कार्त्तिकेयनिकेतनं ।
भरतानुगमालक्ष्य नृत्यगीतादिशास्त्रवित् ॥ ४२२ ॥

ततो देवगृहद्वारशिलामध्यास्त स क्षणं ।
तेजोविशेषचकितैर्जनैः परिहृतान्तिकं ॥ ४२३ ॥
नर्तकी कमला नाम कान्तिमन्तं ददर्श तं ।
असामान्याकृतेः पुंसः सा ददर्श सविस्मया ॥ ४२४ ॥
अंसपृष्टेऽथ धावन्तं करं तस्यान्तरान्तरा ।
अचिन्तयत् ततो गूढं चरन्नेष भवेद्भव ॥ ४२५ ॥
राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः ।
एवं ग्रहीतुमभ्यासः पृष्ठस्थाः पर्णवीटिकाः ॥ ४२६ ॥
अंसपृष्ठेन येनायं लसत्पाणिः प्रतिक्षणं ।
लोलश्रोत्रपुटो मदोत्कमधुपापातात्ययेऽपि द्विपः
सिंहोऽसत्यपि पृष्ठतः करिकुले व्यावृत्य विप्रेक्षिता ।
मेघाम्बुव्यशमेऽप्यशान्तवदनोद्गीर्णस्वरो बर्हिणाश्चेष्टानां
विरमेऽत्र हेतुविगमेऽप्यभ्यासदीर्घास्थितिः ॥ ४२७ ॥
इत्यन्तश्चिन्तयन्ती सा कृत्वा संक्रान्तसंविदं ।
सखीमभिन्नहृदयां विससर्ज तदन्तिकं ॥ ४२८ ॥
प्राग्वत्पृष्ठं गते पाणौ पूगखण्डांस्तयार्पितान् ।
वक्त्रेऽक्षिपज्जयापीडः परिवृत्य ददर्श तां ॥ ४२९ ॥
भ्रूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः ।
दत्त्या वीटिकास्तस्या वृत्तान्तमुपलब्धवान् ॥ ४३० ॥

तया जनितदाक्षिण्यस्तैस्तैर्मधुरभाषितैः ।
साध्व्याः समासनृत्यायाः निन्ये स वसतिं शनैः ॥ ४३१ ॥
अग्राम्यपेशलालापा तथा तं सा विलासिनी ।
उपाचरत् परार्घ्यश्रीः सोऽप्यभूद्विस्मितो यथा ॥ ४३२ ॥
ततः शशाङ्कधवले संजाते रजनीमुखे ।
पाणिनालम्ब्य भूपालं शय्यावेश्म विवेश सा ॥ ४३३ ॥
ततः काञ्चनपर्यङ्कशायी मैरेयमत्तया ।
तयार्थितोऽपि शिथिलं विदधे नाधरांशुकं ॥ ४३४ ॥
प्रवेशयन्निव वक्षस्तां सत्रपां ततः ।
दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत् ॥ ४३५ ॥
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी ।
किं तु कालानुरोधोऽयं सापराधं करोति मां ॥ ४३६ ॥
दासस्तवायं कल्याणि गुणैः क्रीतोऽस्म्यकृत्रिमैः ।
अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि ॥ ४३७ ॥
कार्यशेषमनिष्पाद्य सज्जं मानिनि कञ्चन ।
अभोगे कृतसंकल्पं सुखानां त्वमवेहि मां ॥ ४३८ ॥
तामेवमुक्त्वा पर्यङ्कं साङ्गुलीयेन पाणिना ।
वादयन्निव निःश्वस्य श्लोकमेतं पपाठ सः ॥ ४३९ ॥
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः ।

अनाक्रम्य जगत् सर्वं नो सन्ध्यां भजते रविः ॥ ४४० ॥
श्लोकेनात्मगतं तेन पठितेन महीभुजा ।
सा कलाकुशलाज्ञासीन्महान्तं कश्चिदेव तं ॥ ४४१ ॥
गन्तुकामं च तं प्रातर्नृपं प्रणयिनी बलात् ।
अर्थयित्वा चिरं कालमप्रस्थानमयाचत ॥ ४४२ ॥
एकदा वन्दितुं सन्ध्यां प्रयातः सरितस्तटं ।
चिरायातो गृहं तस्या ददर्श भृशविह्वलं ॥ ४४३ ॥
किमेतदिति पृष्टाथ तमूचे सा शुचिस्मिता ।
सिंहोऽत्र सुमहान् रात्रौ निपत्याहन्ति देहिनः ॥ ४४४ ॥
नरनागाश्वसंहारः कृतस्तेन दिने दिने ।
त्वया दूरं चिरायाते तद्भयेन समाकुला ॥ ४४५ ॥
राजानो राजपुत्रा वा तद्भयेन विसूत्रिताः ।
गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते क्षणदाक्षणे ॥ ४४६ ॥
तामिति ब्रुवतीं मुग्धां निषिध्य च विहस्य च ।
सव्रीड इव तां रात्रिं जयापीडोऽत्यवाहयत् ॥ ४४७ ॥
अपरेद्युर्दिनापाये निर्गतो नगरान्तरात् ।
सिंहागमप्रतीक्षोऽभून्महावटतरोरधः ॥ ४४८ ॥
अदृश्यत ततो दूराडुत्फुल्लबकुलच्छविः ।
अट्टहासः कृतान्तस्य संचारीव मृगाधिपः ॥ ४४९ ॥

अध्वनान्येन यान्तं तमथ मन्थरगामिनं ।
राजसिंहो नदन् सिंहं समाह्वयत हेलया ॥ ४५० ॥
स्तब्धश्रोत्रो व्यात्तवक्त्रः कम्प्रकूर्चः प्रदीप्तदृक् ।
उदस्तपूर्वकायस्तं सगर्जः समुपाद्रवत् ॥ ४५१ ॥
तस्यान्यस्याननविले कफोणिं पततः क्रुधा ।
क्षिप्रकारी जयापीडे वक्षः क्षुरिकयाभिनत् ॥ ४५२ ॥
शोणितं जग्धगन्धेभसिन्दूराभं विमुञ्चता ।
एकप्रहारभिन्नेन तेनात्यजत जीवितं ॥ ४५३ ॥
आमुक्तव्रणपट्टः स कफोणिमथ गोपयन् ।
प्रविश्य नर्तकीवेश्म निशि सुष्वाप पूर्ववत् ॥ ४५४ ॥
प्रभातायां विभावर्य्यां श्रुत्वा सिंहं हतं नृपः ।
प्रहृष्टः कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयं ॥ ४५५ ॥
स दृष्ट्वा तं महाकायमेकप्रकृतिसंहृतं ।
साश्चर्यो निश्चयान्मेने प्रहर्तारममानुषं ॥ ४५६ ॥
तस्य दन्तान्तराल्लब्धं केयूरं पार्श्वगार्पितं ।
श्रीजयापीडनामाङ्कं ददर्शाथ सविस्मयः ॥ ४५७ ॥
स्यात् कुतोऽत्र स भूपाल इति ब्रुवति पार्थिवे ।
जयापीडागमाशङ्कि पुरमासीद्भयाकुलं ॥ ४५८ ॥
ततः पौरान् विमृश्यैव जयन्तः क्षितिपोऽब्रवीत् ।

प्रहर्षावसरे मूढाः कस्माद्वो भयसंभवः ॥ ४५९ ॥
श्रूयते किं जयापीडो राजा भुजबलोर्जितः ।
केनापि हेतुना भ्राम्यन्नेकाकीव दिगन्तरे ॥ ४६० ॥
राजपुत्रः कल्लट इत्युक्ता कल्याणदेव्यसौ ।
तस्मै नियमिता दातुं निष्पुत्त्रेण सता मया ॥ ४६१ ॥
सोऽन्वेष्यश्चेत् स्वयं प्राप्तस्तद्रत्नाहरणेच्छया ।
रत्नद्वीपं प्रतिष्ठासो निधानासादनं गृहात् ॥ ४६२ ॥
अस्मिन्नेव पुरे तेन भाव्यं भुवनशासिना ।
ब्रूयादेनं समान्वेष्य योऽस्मै दद्यामभीप्सतिं ॥ ४६३ ॥
वाचि सप्रत्ययाः पौरा भूपतेः सत्यवादिनः ।
अन्विष्य कमलावासवर्तिनं तं न्यवेदयन् ॥ ४६४ ॥
सामात्यान्तःपुरोऽभ्येत्य प्रयत्नेन प्रसाद्य तं ।
ततः स्ववेश्म नृपतिर्निनाय विहितोत्सवः ॥ ४६५ ॥
कल्याणदेव्यास्तेनाथ कल्याणाभिनिवेशिना ।
राजलक्ष्म्या व्यपास्ताया इव सोऽग्रिग्रहीत् करं ॥ ४६६ ॥
व्यधाद्दिनापि सामग्रीं तत्र शक्तिं प्रकाशयन् ।
पञ्च गौडाधिपान् जित्वा श्वशुरं तदधीश्वरं ॥ ४६७ ॥
गतशेषं प्रभुत्यक्तं सैन्यं संवाहयन् स्थितः ।
मित्रशर्मात्मजो देवशर्मामात्यस्तमाययौ ॥ ४६८ ॥

निजदेशं प्रति ततः स प्रतस्थे तदर्थितः ।
अग्रे जयश्रियं कुर्वन् पश्चात् तेऽथ सुलोचने ॥ ४६९ ॥
सिंहासनं जितादादौ कान्यकुब्जमहीभुजः ।
स राज्यककुदं राजा जहारोदारपौरुषः ॥ ४७० ॥
तस्मिन् प्रविष्टे स्वभुवं स्फूर्जद्दूर्जितविक्रमे ।
सैन्यैस्समं समित्सज्जैर्जज्जो योद्धुं विनिर्ययौ ॥ ४७१ ॥
पुष्कलेत्राभिधे ग्रामे तेन सार्द्धं सुदारुणः ।
जयापीडस्य संग्रामः सुबहूनि दिनान्यभूत् ॥ ४७२ ॥
अनुरक्तप्रजो राजा जज्जराज्यासहिष्णुभिः ।
युधि सोऽन्विष्यमाणोऽभूद्ग्राम्याटविकमण्डलैः ॥ ४७३ ॥
श्रीदेवो ग्रामचण्डालः प्राप्तो ग्राम्यैः समं युधि ।
कोऽत्र जज्ज इति भ्राम्यन् योधान् पप्रच्छ सर्वतः ॥४७४॥
तृष्णार्तं स्वर्णभृङ्गारात् पिबन्तं वारि तस्य ते ।
रणमध्ये हयारूढं तं दूरात् समदर्शयन् ॥ ४७५ ॥
भ्रमयन् क्षेपणीयं स क्षिप्ताश्मानं तदानने ।
सोऽयं हतो मया जज्ज इत्यमोघक्रियोऽनदत् ॥ ४७६ ॥
साहायकाय राज्ञोऽहं यामीत्युक्त्वार्थिताशनः ।
मातुर्हसन्त्या जज्जस्य प्रतिज्ञाय ययौ बधं ॥ ४७७ ॥
अश्मसंरुग्णभीमास्यं मुमूर्षुं पतितं हयात् ।

विचेष्टमानं मेदिन्यां जज्जं त्यक्त्वा ययुर्निजाः ॥ ४७८ ॥
स समर्थाहितापातचिन्तासततदुस्थितः ।
द्रोहार्जितेन राज्येन त्रिभिर्वर्षैर्व्ययुज्यत ॥ ४७९ ॥
न्यासापहाराद्वणिजां वेश्यानां कामिवञ्चनात् ।
द्रोहाच्चोपनता राज्ञामस्थिरा एव संपदः ॥ ४८० ॥
हते जज्जे जयापीडः प्रत्यावृत्य निजां श्रियं ।
जग्राह दोष्णा भूभारं कृत्येन च सतां मनः ॥ ४८१ ॥
प्रपेदे यत्र कल्याणं स विरोधिबधान्नृपः ।
देशे कल्याणपुरकृत् तत्र कल्याणदेव्यभूत् ॥ ४८२ ॥
राजा मल्हाणपुरकृच्चक्रे विपुलकेशवं ।
कमला सा स्वनाम्नापि कमलाख्यं पुरं व्यधात् ॥ ४८३ ॥
महीप्रतीहारपीठाधिकारं प्रतिपद्य सः ।
कल्याणदेवी दाक्षिण्यादकरोदधिकोन्नतिं ॥ ४८४ ॥
उत्पत्तिभूमौ देशेऽस्मिन् दूरदूरतिरोहिता ।
कश्यपेन वितस्तेव तेन विद्यावतारिता ॥ ४८५ ॥
वचो मूर्खोऽयमित्येव कस्मैचिद्वदते स्फुटं ।
सर्वज्ञानं ददच्चक्रे सर्वान् विद्याभियोगिनः ॥ ४८६ ॥
देशान्तरादागमय्य व्याचक्षाणान् क्षमापतिः ।
प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥ ४८७ ॥

क्षीराभिधाच्छब्दविद्योपाध्यायात् संभृतश्रुतः ।
बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥ ४८८ ॥
भूपतिरात्मनः स्पर्द्धी चक्षमे न स कस्यचित् ।
आत्मनस्तु बुधैः स्पर्द्धी शुद्धधीर्वह्वमन्यत ॥ ४८९ ॥
तावत् पण्डितशब्दोऽभूद्राजशब्दादपि प्रथुः ।
तैस्तैर्दोषैर्नतु ग्लानिं कालान्तरवदाययौ ॥ ४९० ॥
नृपतौ विद्वदायत्ते राज्यसाम्मुख्यकाङ्क्षिभिः ।
गृह्या बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ॥ ४९१ ॥
समग्रहीत् तथा राजा सोऽन्विष्यन् निखिलान् बुधान् ।
विद्वद्दुर्भिक्षमभवद्यथान्यनृपमण्डले ॥ ४९२ ॥
अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः ।
विद्वत्तया थक्रियाख्यस्तेन स्वीकृत्य वर्द्धितः ॥ ४९३ ॥
विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः ।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥ ४९४ ॥
स दामोदरगुप्ताख्यं कुट्टिनीमतकारिणं ।
कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात् ॥ ४९५ ॥
मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा ।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥ ४९६ ॥
सुस्वप्ने पश्चिमाशायां लक्षयन्नुदयं रवेः ।

दशं धर्मोत्तराचार्यप्रविष्टं साध्वमन्यत ॥ ४९७ ॥
सचेताः संस्तवव्यक्तविवक्तृत्वो बभूव सः ।
भावानां भुज्यमानानामास्वादान्तरविन्नृपः ॥ ४९८ ॥
अपश्यद्भिर्महास्वादान् भावान् स्वादविवेकिभिः ।
किं ज्ञेयमशनादन्यत् क्ष्मापैरन्धैरिवोक्षभिः ॥ ४९९ ॥
आरूढस्य चितां कृतानुमरणोद्योगप्रियालिङ्गनं
पुण्ड्रेक्षुद्रवपानमुल्बणमहामोहप्रलुप्तस्मृतेः ।
वीतासोरवतंसमाल्यवलयामोदश्च यादृग्भवेद्भावानां
सुभगः स्वभावमहिमा निश्चेतसस्तादृशः ॥ ५०० ॥
मन्त्रविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव ।
एकैव विदिता मूर्तिः सहस्रगुणतां ययौ ॥ ५०१ ॥
अकुर्वन् त्रिगुणामाज्ञां लङ्केन्द्रात् पञ्च राक्षसान् ।
तेनानयेति जगदे दूतो जातु पुरःस्थितः ॥ ५०२ ॥
सान्धिविग्रहिकः सोऽथ गच्छन् पोतच्युतोऽम्बुधौ ।
प्राप पारं तिमिग्रासं तिमिमुत्पाट्य निर्गतः ॥ ५०३ ॥
प्रियमर्त्यो रामभक्त्या नृपाज्ञालेखदायिनं ।
स्वदेशमनयद्दूतैरक्षोभिस्तं विभीषणः ॥ ५०४ ॥
दूतं वित्तैः पूरयित्वा सरोऽगाधं च राक्षसैः ।
चक्रे जयपुरं कोट्टं त्रिविष्टपसमं नृपः ॥ ५०५ ॥

बुद्धत्रयं महाकारं विहारं च विधाय सः ।
नगरान्तर्जयादेवीं पुण्यकर्मा स निर्ममे ॥ ५०६ ॥
तत्पुरे चतुरात्मा च शेषशायी च केशवः ।
विष्णुलोकस्थितिं त्यक्त्वा ध्रुवं बध्नाति सन्निधिं ॥ ५०७ ॥
अन्यत् कर्मान्तरं किञ्चित् कारयित्वा स राक्षसान् ।
व्यधात् कारुभिरेवाम्भ इति शंसन्ति केचन ॥ ५०८ ॥
स हि स्वप्ने जलान्तर्मे कुरु द्वारवतीमिति ।
उक्तः कंसारिणा चक्रे विनिर्माणं तथाविधं ॥ ५०९ ॥
श्रीद्वारवत्यधिष्ठानं बाह्य कोट्टं तथाप्यसौ ।
अभ्यन्तरं जयपुरं ब्रूतेऽद्याप्यखिलो जनः ॥ ५१० ॥
मन्त्री पञ्चमहाशब्दभाजनं जगतीभुजः ।
तस्मिन् जयपुरे कोट्टे जयदत्तोव्यधान्मठं ॥ ५११ ॥
राजक्षत्तुः प्रमोदस्य जामाता मथुरापतेः ।
आचाभिधो व्यरचयच्छुचिराचेश्वरं हरं ॥ ५१२ ॥
पुनः संभृतसामग्र्यो दिग्जयाय विनिर्ययौ ।
बलैर्जलधिवेलाद्रीन् लाघयन्नलघुद्विपैः ॥ ५१३ ॥
संप्रविष्टापि पूर्वाद्रिमविच्छिन्ना हिमाचले ।
भगीरथस्य गङ्गेव रेजे तस्यानुगा चमूः ॥ ५१४ ॥
सार्द्धं प्रचण्डैश्चण्डालैरटन्तः कटकाद्बहिः ।

तस्यासन् यामिका रात्रौ सुम्मुनिप्रमुखा नृपाः ॥ ५१५ ॥
सामान्यद्विनयादित्य इति प्रख्यापयन् नृपः ।
पूर्वाशां विनयादित्यपुरेणालङ्कृतां व्यधात् ॥ ५१६ ॥
अभ्युत्सेकेन सहसा साहसाध्यवसायिनां ।
श्रीरारोहति सन्देहं महतामपि भूभृतां ॥ ५१७ ॥
भीमसेनाभिधानस्य स दुर्गं पूर्वभूपतेः ।
निःशब्दो व्रतिभिः सार्द्धं व्रतिलिङ्गी विवेश यत् ॥ ५१८ ॥
तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः ।
भ्राता जज्जस्य सिद्धाख्यो गत्वा राज्ञे न्यवेदयत् ॥ ५१९ ॥
भूपतिर्भीमसेनोऽथ राज्ञाकस्माद्बबन्ध तं ।
नहुषाजगरो भीममिव भीमपराक्रमं ॥ ५२० ॥
तस्मिन् वीरे तथा बद्धे धुर्ये पुरुषकारिणां ।
पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः ॥ ५२१ ॥
जयापीडस्त्वसंमूढो व्यसनेऽप्यतिदारुणे ।
तांस्तान् संचिन्तयन्नासीदुपायानुद्योन्मुखः ॥ ५२२ ॥
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा ।
लूतामयकृता व्यापदुदपद्यत मण्डले ॥ ५२३ ॥
आमयः स्पर्शसंचारी तत्र व्यापादकश्च सः ।
देशदोषादतो जन्तुर्लूताव्याप्तो विवर्ज्यते ॥ ५२४ ॥

तदाकर्ण्य जयापीडो ज्ञातोपायप्रयुक्तधीः ।
स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवान् रहः ॥ ५२५ ॥
तैः पित्तोद्रेचकैर्भुक्तैर्ज्वलत्पित्तोऽवक्लृज्वरं ।
वग्रवृत्तपयश्चाङ्गे क्षिप्ता स पिडकोऽभवत् ॥ ५२६ ॥
तं लूताव्याप्तमाकर्ण्य विपक्षो रक्षिणां मुखात् ।
विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात् ॥ ५२७ ॥
एवं स्वमतिमाहात्म्यात् सन्तीर्णो विपदर्णवात् ।
व्याप्तव्योमाग्रकीर्दुर्गे यशश्च परिपन्थिनः ॥ ५२८ ॥
यः सर्वकालमबुधैः परिक्लिस्यमानो
मूलाङ्कुराण्यपि न जातु पुरस्करोति ।
व्यापत्सु शास्त्रविटपी स फलं प्रसूय पुंसः
किलैकपद एव लुनात्यलक्ष्मीं ॥ ५२९ ॥
तमैच्छदभिसन्धातुं विद्याविक्रमसंयुतः ।
मायाव्यरमुडिर्नाम राजा नेपालपालकः ॥ ५३० ॥
अकृतप्रणतिस्तस्य प्रविष्टस्य स्वमण्डलं ।
अगात् सुदूरमध्वानं ससैन्योऽपससार सः ॥ ५३१ ॥
जिगीषोस्तस्य तु तथा तत् तत् पार्थिवनिर्जयः ।
पृथक् प्रयत्ननिर्वर्त्यो नाभूत् तदनुसारिणः ॥ ५३२ ॥
मग्नं क्वापि क्वचिद्दृश्यं प्रतिदेशं स वैरिणां ।

श्येनः कपोतं कक्षान्तरिवान्विष्यन् जगाम सः ॥ ५३३ ॥
ततोऽग्निःशोषितापाये तस्मिन् कुर्वन् स दिग्जयं ।
आशन्नाब्धेस्तटे सिन्धोस्समुपावेशयद्बलं ॥ ५३४ ॥
प्रतस्थे दिवसैर्द्वित्रैरथ पूर्वार्णवोन्मुखः ।
कर्षन् वेलानिलस्पर्शोत्सृष्टध्वजपटाश्रमूः ॥ ५३५ ॥
ततस्तस्मिन् सरित्पारे दक्षिणस्मिन् क्षमापतेः ।
तस्थावरमुडिः सैन्यं स्वच्छत्रार्कं प्रकाशयन् ॥ ५३६ ॥
भूरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलं ।
प्रजज्वाल जयापीडः पीतसर्पिरिवानलः ॥ ५३७ ॥
स जानुदघ्नं निर्विघ्नं पश्यन्नग्रे सरिज्जलं ।
अपूर्वत्वादभूमिज्ञः क्रुद्धस्तत् तं व्यगाहत ॥ ५३८ ॥
मध्यं प्राप्ते नृपे पूर्णा वेलया वर्द्धमानया ।
अकालेऽभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित् ॥ ५३९ ॥
नरनागाश्वबकुलं तथा सैन्यं महीपतेः ।
प्रवृद्धया प्लाव्यमानं क्षणात् संक्षयमाययौ ॥ ५४० ॥
नृपतिर्वीचिसंमर्दभ्रंशिताभरणांशुकः ।
बाहुभ्यां लहरीश्छिन्दन् जलैर्दूरमनीयत ॥ ५४१ ॥
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्जितैः ।
सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ॥ ५४२ ॥

क्षिप्रकारी स दृतिभिः सन्नद्धैः सरितोऽन्तरात् ।
स चाकृष्य जयापीडं बबन्ध विहितोत्सवः ॥ ५४३ ॥
दैवस्याम्बुमुचश्च नास्ति नियम कोऽप्यानुकूल्यं प्रति
व्यञ्जन् यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियं ।
क्षिप्रं दीर्घनिदाघवासरविपत्संतापनिर्वापणं
प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च य ॥ ५४४ ॥
स कालगण्डिकातीराश्रयात्युच्चाश्मवेश्मनि ।
निचिक्षेप जयापीडमासानां रक्षिणां करे ॥ ५४५ ॥
तथा काश्मीरिको राजा निमग्नो व्यसने पुनः ।
स किंकर्तव्यतामूढः शुचा गूढमदह्यत ॥ ५४६ ॥
कलावत्सु शशाङ्कोऽपि तेजस्विष्वर्यमापि तं ।
न ददर्श यथा धीमान् स ररक्ष तथा नृपः ॥ ५४७ ॥
अपश्यन्निर्गतिः किंचिदालोकन्यस्तलोचनः ।
आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ॥ ५४८ ॥
अवस्थावेदकास्तत्र ग्रथिताः पृथिवीभुजा ।
आर्द्रान्तःकरणैः श्लोकाः स्मर्यन्तेऽद्यापि सूरिभिः ॥ ५४९ ॥
तथा तस्मिन् स्थिते मानी देवशर्मैव मन्त्रिषु ।
चिन्तयन् स्वामिसंमानमनिशं पर्यतप्यत ॥ ५५० ॥
भर्तुः स्वदेहत्यागेन स हितं कर्तुमुद्यतः ।

दूतैररमुडेश्चक्रे प्रियवाग्भिः प्रलोभनं ॥ ५५१ ॥
जयापीडश्रिया साकं राज्यं कश्मीरमण्डले ।
दास्यामि तुभ्यमित्यस्य दूतैः स श्राविताेऽभवत् ॥ ५५२ ॥
प्राप्तेषु प्रतिदूतेषु पूर्णायामथ संविदि ।
गृहीतकटको मन्त्री नेपालविषयं ययौ ॥ ५५३ ॥
स कालगण्डिकासिन्धोरर्वाचि कटकं तटे ।
स्थापयित्वा परं पारं ययौ मितपरिच्छदः ॥ ५५४ ॥
सामन्तैरग्रमायातैस्तां सभां संप्रवेशितं ।
सत्कृत्यारमुडिः प्रह्वं न्यवेशयत विष्टरे ॥ ५५५ ॥
अध्वश्रान्त इति क्षिप्रं प्रतिमुक्तः क्षमाभुजा ।
तद्विसृष्टोपचारस्तन्निनायावसथे दिनं ॥ ५५६ ॥
स चारमुडिभूभृच्च पीतकोशौ परस्परं ।
आसतां निर्जनेऽन्येद्युः कर्तव्यकृतनिश्चयौ ॥ ५५७ ॥
नृपमूचेऽथ सचिवो जयापीडार्जितं धनं ।
अस्ति सैन्ये तदाप्तानां तस्य वा विदितं च तत् ॥ ५५८ ॥
दानेन भविता मोक्षस्तवेत्युक्त्वा विमोक्ष्यन् ।
तस्मात् तं प्रष्टुमिच्छामि क्व वसु न्यस्तमित्यहं ॥ ५५९ ॥
अत एव मया सैन्यं संहृतं न प्रवेशितं ।
यदेतन्मध्यगाः शक्या न बद्धं न्यासधारिणः ॥ ५६० ॥

तस्मादेकैकमाकृष्य तेषु बद्धेषु सैनिकाः ।
कोपमज्ञातहृदया न यास्यन्ति विवद्धवः ॥५६१॥
एवं विमोक्षितात् तस्मात् प्राप्तोऽप्याज्ञां स लब्धवान् ।
बद्धस्य प्रययौ पार्श्वं जयापीडमहीभुजः ॥५६२॥
तदालोकनजं शोकं दर्शयन् धैर्यसागरः ।
गूढं तन्निर्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपं ॥५६३॥
अपि त्वया निजं तेजो भित्तिभूतं न हारितं ।
तस्मिन् हि सति सिध्यन्ति साहसालेख्यकल्पनाः ॥५६४॥
स तं बभाषे निःशस्त्रो मन्त्रिन्नेवं व्यवस्थितः ।
अद्भुतं कर्म किं कुर्यां म्रियमाणेन तेजसा ॥५६५॥
मन्त्री तमूचे तेजश्चेद्राजन् न निसृतं तव ।
जानीहि तत्क्षणेनैव लंघितं विपदर्णवं ॥५६६॥
अपि वातायनादस्मात् पतित्वा निम्नगाम्भसि ।
पारं गन्तुं समर्थोऽसि सैन्यं ह्यत्र निजं तव ॥५६७॥
राजा जगाद तं नास्मात् पतित्वोत्थीयतेऽम्भसः ।
विना दृतिं दृतिश्चात्र दूरपाताद्विदीर्यते ॥५६८॥
तस्मान्नायमुपायोऽत्र न च नाम विमानितः ।
बहु मन्ये तनुत्यागमन्निर्मथ्यापकारिणां ॥५६९॥
इति निश्चित्य सोऽमात्यस्तमवादीन्महीपते ।

वह्निः केनाप्युपायेन वह त्वं मालिकाद्वयं ॥ ५७० ॥
प्रविश्यैकाकिनैवाथ दृष्टव्यः संभृतो मया ।
सरिदुत्तरणोपायः सोऽनुष्ठेयोऽप्यशङ्कितं ॥ ५७१ ॥
श्रुत्वेति निर्गतो गत्वा पायुक्षालनवेश्म सः ।
सविलम्बं वह्निर्वेलां तदुत्कामत्यवाहयत् ॥ ५७२ ॥
एकाकी संप्रविष्टोऽथ तं ददर्श च्युतं क्षितौ ।
विपन्नं गलमुद्बध्य दृब्ध्या चेलचीरया ॥ ५७३ ॥
सद्यो व्यापादिततनुः श्वासापूरितविग्रहः ।
अभेद्योऽहं तव दृतिर्मामारुह्य तरापगां ॥ ५७४ ॥
आरोढुरूरुबन्धाय स्वोर्वोरुष्णीषपट्टिका ।
बद्धा मया त्वां प्रविश्य क्षिप्रमेव पताम्भसि ॥ ५७५ ॥
नखनिर्भिन्नगात्राग्रलिखितामिति संविदं ।
दृष्ट्वा चावाचयत् कण्ठनिबद्धांशुकपल्लवे ॥ ५७६ ॥ तिलकं ॥
विस्मयस्नेहयोः पश्चात् पूर्वं स सरितस्ततः ।
प्रवाहे पतितो राज्ञा परं पारं समासदत् ॥ ५७७ ॥
प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः ।
तमशेषं सभूपालं नेपालविषयं क्षयं ॥ ५७८ ॥
रक्षिणोऽपि न यावत् तमजानन् बन्धनाच्च्युतं ।
तावदेव कथाशेषं विषयं तं चकार सः ॥ ५७९ ॥

नृत्यत्कबन्धः स्वर्गस्त्रीमुक्तस्रक् तूर्यघोषवान् ।
भूपतेर्बन्धनान्मोक्षे बभूव समरोत्सवः ॥ ५८० ॥

दावानलोल्वणभुवा गिरयो निदाघे
यत्रैव दूरमितरे परिवर्जनीयाः ।
तत्रैव संभवति सान्द्रहिमद्रवार्द्रश्चित्रं
तुषारशिखरी नितरां निषेव्यः ॥ ५८१ ॥

जज्ञादीनां क्षणो यत्र जन्म स्वामिद्रुहामभूत् ।
तत्रैव मन्त्रिणश्चित्रं कृतिनो देवशर्मणः ॥ ५८२ ॥

नाभूद्धिसदृशः सूनु स पितुर्मित्रशर्मणः ।
तमोमयो भासुरस्य भानोरिव शनैश्चरः ॥ ५८३ ॥

रत्नाकरोपमे तस्मिन् सचिवेऽस्तमुपागते ।
प्राप्तामपि श्रियं मेने नृपतिर्ह्रारितामिव ॥ ५८४ ॥

तस्य दिग्विजयस्यान्ते मानग्लानिर्विनिर्ययौ ।
मानसात् पृथिवीभर्तुर्नामात्योऽपि क्रिया पुनः ॥ ५८५ ॥

चित्रं जितवतस्तस्य स्त्रीराज्ये मण्डलं महत् ।
इन्द्रियग्रामविजयं बह्वमन्यत भूभुजा ॥ ५८६ ॥

कर्णश्रीपट्टमाबद्ध्य स्त्रीराज्यान्निर्जिताहृतं ।
धर्माधिकरणाख्यं च कर्मस्थानं विनिर्ममे ॥ ५८७ ॥

द्वितीयं चलगञ्जाख्यं कर्मस्थानमपि व्यधात् ।

उपयुक्तं प्रयाणेषु गज्जेद्रस्थिते निजे ॥ ५८८ ॥
किमन्यद्दू भुजावासनिवासिन्या जयश्रियः ।
चत्वारोऽम्बुधयोऽभूवन् विलासमणिदर्पणाः ॥ ५८९ ॥
पुनः प्रविश्य कश्मीरान् स भूपैः परिवारितः ।
चिराय बुभुजे राजा विजयोपार्जितां श्रियं ॥ ५९० ॥
तं कदाचिन्नृपं स्वप्ने सर्वाशाविजयोर्जितं ।
पुमान् दिव्याकृतिः कोऽपि व्याजहार कृताञ्जलिः ॥ ५९१ ॥
सुखं त्वद्विषये राजन् वसन्नस्मि सबान्धवः ।
नागेन्द्रोऽहं महापद्मनामा त्वां शरणं श्रितः ॥ ५९२ ॥
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः ।
जलाकांक्षिणि वित्तेन विक्रेतुं मरुमण्डले ॥ ५९३ ॥
तस्माच्चेत् पासि मां तत् ते स्वर्णधातुसुवं गिरिं ।
स्वदेशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ॥ ५९४ ॥
राजा स्वप्ने निशम्येति दिक्षु संप्रेरितैश्चरैः ।
कुतोऽपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितं ॥ ५९५ ॥
दत्ताभयः स नागोक्तं यथावत् सर्वमुक्तवान् ।
सविस्मयेन भूभर्त्रा स्वयं भूयोऽप्यपृच्छ्यत ॥ ५९६ ॥
भूरि योजनविस्तीर्णात् सरसोऽभ्यन्तरात् त्वया ।
नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथं ॥ ५९७ ॥

स तं व्यज्ञिज्ञपद्राजन्नचिन्त्यामन्त्रशक्तय: ।
तावद्दिदृक्षसे क्षिप्रमेत्याश्चर्यं विलोक्यतां ॥ ५९८ ॥
अथानुगम्यमानः स राज्ञा प्राप्तः सरोऽन्तिकं ।
अभिमन्त्र्योज्झितैर्बाणैर्बद्धाशोऽशोषयज्जलं ॥ ५९९ ॥
राजाऽपश्यत् ततः पङ्के लुठन्तं मानुषाननं ।
वितस्तिदेश्यमुरगं भूरिक्षुद्रोरगान्वितं ॥ ६०० ॥
मन्त्रसंकोचितं राजन् गृह्णाम्यमुमिति ब्रुवन् ।
माग्रहीरिति भूपेन सोऽभिधाय न्यषिध्यत ॥ ६०१ ॥
तूर्णं राजाज्ञया याते मन्त्रवीर्येऽथ संहृते ।
सरोऽभूत् प्रागवस्थं तत् पुनर्व्याप्तं दिगन्तरं ॥ ६०२ ॥
द्राविडं द्रविणं दत्वा विसृज्याचिन्तयन्नृपः ।
दध्यान् नाध्याप्यसौ नागः कथं स्वर्णाकरं गिरिं ॥ ६०३ ॥
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः ।
केनोपकारेण गिरिः स्वर्णसूर्दर्श्यते तव ॥ ६०४ ॥
स्वदेशोऽयं विदेशोऽयमिति बुद्धेः प्रवर्तकः ।
अन्वयव्यतिरेकाभ्यां स्थित्यभ्यासः शरीरिणां ॥ ६०५ ॥
शरणं त्वामहमगामवमानभयात् पुनः ।
शरण्येन सता तत् तु भवतैव प्रदर्शितं ॥ ६०६ ॥
उदन्वानिव योऽन्तोभ्यो ज्ञायते संश्रितैः प्रभुः ।

क ह्रीस्ततोऽन्या सोऽन्यैर्यत् तेषामग्रेऽभिभूयते ॥ ६०७ ॥
याभिरन्याभिर्भूताभिरीदितस्त्रातुमक्षमः ।
तासां केनाभिमानेन स्त्रीणां दत्त्याम्यकं मुखं ॥ ६०८ ॥
ये कारणासधर्माणो व्यामूढस्य भवाम ते ।
विडम्ब्यमानाः क्रीडायै ते वयं प्राकृता इव ॥ ६०९ ॥
अथ वा श्रीमदान्धानामप्रेक्षापूर्वकारिणां ।
यत्किञ्चन विधायित्वं पार्थिवानां किमद्भुतं ॥ ६१० ॥
मन्यन्ते क्ष्माभुजः क्रीडामुन्नतानां विमाननां ।
यावज्जीवन्तु सश्वासं मरणं तां विदन्ति ते ॥ ६११ ॥
उपेक्ष्यपक्षे भूपानां मानः स्वार्थस्य सिद्धये ।
स तु प्राणानुपेक्ष्यापि ग्राह्यपक्षे मनस्विनां ॥ ६१२ ॥
मकृतो येऽवमन्यन्ते घटन्ते च विमानितैः ।
मानस्वरूपाभिज्ञत्वं तेषां केनानुमीयते ॥ ६१३ ॥
भवन्त इव तत्रापि न वयं व्यर्थदर्शनाः ।
ताम्रधातुरसस्यन्दी दृश्यते तद्गिरिस्तव ॥ ६१४ ॥
इत्युक्त्वा संविदं तस्मै स्वप्न एव स तां ददौ ।
यथा प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिं ॥ ६१५ ॥
स तस्मात् क्रमराज्यस्थात् ताम्रमाकृष्य निर्ममे ।
शतं दीनारकोटीनामेकोनं स्वाभिधाङ्कितं ॥ ६१६ ॥

पूर्णा कोटिशतं कुर्याद्यः स मां निर्जयेदिति ।
दर्पभङ्गाय भूपानां समयं स्थापयेन्नृपः ॥ ६१७ ॥
समस्या इव स क्ष्माभृत् सावशेषैर्विचेष्टितैः ।
चिक्षेप तुल्यनिर्माणकुण्ठत्वायेति भूभृतां ॥ ६१८ ॥
अथाकस्मात् महीपालः प्रजाभाग्यविपर्ययैः ।
त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोऽधुना ॥ ६१९ ॥
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनं ।
इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत् ॥ ६२० ॥
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः ।
प्रविवर्द्धितवित्तेच्छः सोऽभूल्लोभवशंवदः ॥ ६२१ ॥
काश्मीरिकाणामुत्पन्नं निजाज्ञाव्यवधायकं ।
कायस्थवक्त्रप्रेक्षित्वं ततः प्रभृति भूभृतां ॥ ६२२ ॥
महत्त्वस्य महीभर्तुर्योऽभूत् तत् तन् नृपाग्रहे ।
वास्तव्यबन्धचिन्तायां स एव स्थैर्यमाययौ ॥ ६२३ ॥
यत् सतां प्रशमादायि पापस्योपदिदेश तत् ।
जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डतां ॥ ६२४ ॥
स सौदास इवानेकलोकप्राणापहारकृत् ।
अस्तुत्यकृत्यसौहित्यं स्वप्नेऽपि न समाययौ ॥ ६२५ ॥
कुर्मः किल्बिषमेतदेव हृदये कुर्वेति कौतूहलात्

स्वैरिण्यः क्षितिपाश्च धिक् चपलतां क्रौर्यं च कुर्युः सकृत् ।
पापाक्रान्तधियो भवन्त्यथ यथा नान्यान् स्पृशन्त्योऽपि ता
दूयन्ते न च ते यथा स्वपितरौ घ्नन्तोऽपि शान्तत्रपाः ॥ ६२६ ॥
लोभाभ्यासात् तथा क्रौर्यं स ययौ वत्सरत्रयं ।
सह कार्षकभागेन यथाकार्षीच्छिरत्फलं ॥ ६२७ ॥
लब्धवध्वस्तधीर्भूभृत् स्वल्पवित्तलवप्रदान् ।
सर्वस्वहारिणो मेने कायस्थान् हितकारिणः ॥ ६२८ ॥
सामुद्रास्तिमयो नृपाश्च सदृशा एके हृतानम्भसः
स्वस्मादेव कणान् घनस्य जहतो जानन्ति ये दातृतां ।
सर्वस्मात् स्फुटलुण्ठिताद्वितरतो लेशान् किलान्येऽपि
ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायितां ॥ ६२९ ॥
सर्वकालं ब्राह्मणानामक्रोधैर्यमकुण्ठितं ।
निस्त्रिंशस्य बभूवुर्ये तस्यापि परिपन्थिनः ॥ ६३० ॥
देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः ।
विक्रोशन्तोऽनुमरणाद्धरणान्नापि पार्थिवः ॥ ६३१ ॥
विप्राग्र्यं शतमेकोनमेकाह्नेन विपद्यते ।
निवेद्यमेतदित्यूचे क्रौर्याक्रान्तोऽथ पार्थिवः ॥ ६३२ ॥
विपर्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः ।
एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ॥ ६३३ ॥

नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः ।
श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ॥ ६३४ ॥
भाष्यव्याख्याक्षणो श्लोकैर्वैलक्षण्यकृते: कृतः ।
सोऽयं तस्य विपर्यासो बुधैरिव विवर्तितः ॥ ६३५ ॥
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः ।
श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ॥ ६३६ ॥
तूलमूलापकर्ता च चन्द्रभागातटे स्थितः ।
विप्राणां शतमेकोनमशृणोत् तज्जले मृतं ॥ ६३७ ॥
ततोऽपकारकरणादेव प्रविरतोऽभवत् ।
वास्तव्यानां कृतां भूमिं न तु निःशेषतो जहौ ॥ ६३८ ॥
अथ विज्ञप्तिसमये तूलमूलौकसो द्विजाः ।
चुक्रुशुर्जातु तस्याग्रे प्रतीकारकराङ्क्ताः ॥ ६३९ ॥
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः ।
अन्वभावि तदग्रेऽपि ब्राह्मणैर्न विमानना ॥ ६४० ॥
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलं ।
निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ॥ ६४१ ॥
तदाकर्ण्यास्तसामन्तत्यक्तपृष्टः क्षमापतिः ।
उल्लासितैकभ्रूलेखो दर्पाद्वचनमब्रवीत् ॥ ६४२ ॥
भिक्षाकणभुजां कोऽयं शठानां वो मदज्वरः ।

येनर्षय इव ब्रूथ प्रभावव्यापकं वचः ॥ ६४३ ॥
भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ ।
इडिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः ॥ ६४४ ॥
राजन् युगानुरूपेण भावाभावानुवर्तिनः ।
शासितुस्तेऽनुसारेण न कस्मादृषयो वयं ॥ ६४५ ॥
आह स्म विश्वामित्रो वा वशिष्ठो वा तपोनिधिः ।
त्वमगस्त्योऽथ वा किं स्थ इति दर्पेण तं नृपः ॥ ६४६ ॥
ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः ।
स फणीवोत्फणस्ताम्यन् कोपान्नृपतिमब्रवीत् ॥ ६४७ ॥
भवान् यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा ।
विश्वामित्रमुखेभ्योऽहं तत्रैको भवितुं क्षमः ॥ ६४८ ॥
विहस्योवाच तं राजा विश्वामित्रादिकोपतः ।
हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ॥ ६४९ ॥
पाणिना ताडयन्नुर्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः ।
मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किं ॥ ६५० ॥
तत् श्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत् ।
पततु ब्राह्मदण्डोऽसौ किमद्यापि विलम्बते ॥ ६५१ ॥
नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते ।
राज्ञः कनकदण्डोऽङ्के वितानस्खलितोऽपतत् ॥ ६५२ ॥

तस्मादेकैकमाहूय तेषु बद्धेषु सैनिकाः ।
कोपमज्ञातहृदया न यास्यन्ति विवत्तवः ॥ ५६१ ॥
एवं विनिश्चितात् तस्मात् प्राज्ञोऽप्याज्ञां स लब्धवान् ।
बद्धस्य प्रययौ पार्श्वे जयापीडमहीभुजः ॥ ५६२ ॥
तदालोकनजं शोकं दर्शयन् धैर्यसागरः ।
गृहं तन्निर्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपं ॥ ५६३ ॥
अपि त्वया निजं तेजो भित्तिभूतं न हारितं ।
तस्मिन् हि सति सिध्यन्ति साहसालेख्यकल्पनाः ॥ ५६४ ॥
स तं बभाषे निःशस्त्रो मन्त्रिन्नेवं व्यवस्थितः ।
अद्भुतं कर्म किं कुर्यां ध्रियमाणेन तेजसा ॥ ५६५ ॥
मन्त्री तमूचे तेजश्चेद्राजन् न निःसृतं तव ।
जानीहि तत्क्षणेनैव लंघितं विपदर्णवं ॥ ५६६ ॥
अपि वातायनादस्मात् पतित्वा निम्नगाम्भसि ।
पारं गन्तुं समर्थोऽसि सैन्यं ह्यत्र निजं तव ॥ ५६७ ॥
राजा जगाद तं नास्मात् पतित्वोत्थीयतेऽम्भसः ।
विना दृतिं दृतिश्चात्र दूरपाताद्विदीर्यते ॥ ५६८ ॥
तस्मान्नायमुपायोऽत्र न च नाम विमानितः ।
बहु मन्ये तनुत्यागममिर्मध्यापकारिणं ॥ ५६९ ॥
इति निश्चित्य सोऽमात्यस्तमवादीन्महीपते ।

वह्निः केनाप्युपायेन वह त्वं नासिकाद्वयं ॥ ५७० ॥
प्रविश्यैकाकिनैवाथ द्रष्टव्यः संभृतो मया ।
सरिदुत्तरणोपायः सोऽनुष्ठेयोऽप्यशङ्कितं ॥ ५७१ ॥
श्रुत्वेति निर्गतो गत्वा पायुक्षालनवेश्म सः ।
सविलम्बं वह्निर्वेलां तदुत्कामत्यवाहयत् ॥ ५७२ ॥
एकाकी संप्रविष्टोऽथ तं ददर्श च्युतं क्षितौ ।
विपन्नं गलमुद्बध्य दृढया चेलचीरया ॥ ५७३ ॥
सद्यो व्यापादिततनुः श्वासापूरितविग्रहः ।
अभेद्योऽहं तव दृतिर्मामारुह्य तरापगां ॥ ५७४ ॥
आरोढुरूरुबन्धाय स्वोर्वोरुष्णीषपट्टिका ।
बद्धा मया त्वां प्रविश्य क्षिप्रमेव पताम्भसि ॥ ५७५ ॥
नखनिर्भिन्नगात्रास्रलिखितामिति संविदं ।
दृष्ट्वा चावाचयत् कण्ठनिबद्धांशुकपल्लवे ॥ ५७६ ॥ तिलकं ॥
विस्मयस्नेहयोः पश्चात् पूर्वं स सरितस्ततः ।
प्रवाहे पतितो राज्ञा परं पारं समासदत् ॥ ५७७ ॥
प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः ।
तमशेषं सभूपालं नेपालविषयं क्षयं ॥ ५७८ ॥
रक्षिणोऽपि न यावत् तमज्ञानन् बन्धनाच्युतं ।
तावदेव कथाशेषं विषयं तं चकार सः ॥ ५७९ ॥

कुकृत्यं योगवाहित्वं वैधुर्यं द्रोहवृत्तिता ।
दूर्वृत्तस्य प्रभोरन्यत् परिहारान्न भेषजं ॥ ६७१ ॥
सुवर्णपार्श्वं विप्रेभ्यो दधत् फलपुरं तथा ।
भूभृत् स लोचनोत्सं च द्वादशाब्दानभूद्विभुः ॥ ६७२ ॥
कल्याणदेव्यां संजातो जयापीडमहीभुजा ।
संग्रामापीडनामाथ बभूव भुवनेश्वरः ॥ ६७३ ॥
पृथिव्यापीड इत्यन्यन्नाम बिभ्रत् स पार्थिवः ।
समाप्तिं सप्तभिर्वर्षैः साम्राज्यस्य समासदत् ॥ ६७४ ॥
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः ।
ललितापीडजो राजा शिशुर्देश्यस्ततोऽभवत् ॥ ६७५ ॥
रागग्रहगृहीतस्य ललितापीडभूपतेः ।
वेश्यायां कल्पपाल्यां यो जयादेव्यामजायत ॥ ६७६ ॥
उपाख्यस्याखुवग्रामकल्पपालस्य तां सुतां ।
रूपलुब्धोऽवरुद्धवमनेषीत् स हि भूपतिः ॥ ६७७ ॥
पद्मोत्पलककल्याणमम्मधर्मैः समातुलैः ।
बालकैः पाल्यमानाभूत् पृथिवी भोगभागिभिः ॥ ६७८ ॥
तस्य पञ्च महाशब्दान् ज्यायानुत्पलकोऽग्रहीत् ।
अन्ये जगृहिरेऽन्यानि कर्मस्थानानि मातुलाः ॥ ६७९ ॥
आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्वन्दिताज्ञया ।

भूभृज्जनन्या विदधे जयादेव्या जयेश्वरः ॥ ६८० ॥
राज्ञां कृपणवित्तैर्यत् प्रविष्टैः पुष्यते धनं ।
अचिरान्नीयते शान्तिमपूर्वैः कैश्चिदेव तत् ॥ ६८१ ॥
जयापीडस्य यत्किञ्चित् सूनुना हि व्ययीकृतं ।
सूनुश्यालैरशेषं तत् तैः क्रमेण हृतं वसु ॥ ६८२ ॥
भगिनीभगसौभाग्यसंभवैर्विभवैः कृताः ।
ते भङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः ॥ ६८३ ॥
निरङ्कुशं चेष्टमानाः शनकैस्त्यक्तशैशवात् ।
ते स्वस्रीयान्नृपान्नाशमकुलीनाः शशङ्किरे ॥ ६८४ ॥
अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः ।
राज्येच्छया तैः स्वस्रीयः स्वामी च स नृपो हृतः ॥ ६८५ ॥
भुक्तावनितो द्वादशाब्दांस्तस्मिन् व्यापादिते तथा ।
नैच्छन्नेकस्य ते राज्यं परस्परमहंकृताः ॥ ६८६ ॥
तेषामाक्रान्तदेशानां नाममात्रमहीपतीन् ।
तांस्तान् कर्तुमसामान्यान् विरोधोऽन्योन्यमुद्ययौ ॥ ६८७ ॥
अथ मेघावलीदेव्यां जातो वप्पियभूपतेः ।
ज्येष्ठोऽप्यचाक्रिकतया योऽभूद्राज्यविवर्जितः ॥ ६८८ ॥
सोऽयं त्रिभुवनापीडो जयादेव्यामजीजनत् ।
राजानमजितापीडं तं बलादुत्पलो व्यधात् ॥ ६८९ ॥ युग्मं॥

शेडादिगणनास्थाननिष्यन्दोत्था नृपाय ते ।
पद्मभाद्गणनास्थानादशनाच्छादने ददुः ॥ ६१० ॥
एकसंभाषणात् खेदं यात्स्वन्येषु दिने दिने ।
पद्मतुल्यसुखान् नेच्छद्रुस्थो राजा तदाश्रितः ॥ ६११ ॥
ते राजन्यजितापीडे राज्योत्पत्त्यपकारिणः ।
पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे ॥ ६१२ ॥
सापत्यास्ते बुभुजिरे राज्यं स्वामिविवर्जितं ।
निर्जने महिषं शान्तं मिथः सेर्ष्या वृका इव ॥ ६१३ ॥
उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतं ।
पद्मस्य पद्मस्वाम्यास्ते कृतिः पद्मपुरं तथा ॥ ६१४ ॥
बधूर्व्यधत्त पद्मस्य गुणादेवी गुणोज्ज्वला ।
मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे ॥ ६१५ ॥
धर्मी धर्मोद्यमो हेतुर्धर्मस्वामिविनिर्मितेः ।
कल्याणवर्मा सत्कर्मा कल्याणस्वामिकेशवे ॥ ६१६ ॥
दीनाराणां सहस्राणि पञ्चोपकरणं कृती ।
एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः ॥ ६१७ ॥
पञ्चाशीतिसहस्राणि गवां दत्वा प्रकल्पयन् ।
कुम्भप्रतिष्ठासंभारं यो मम्मस्वामिनं व्यधात् ॥ ६१८ ॥
तस्यैकस्यैव सामग्र्यां कः संख्यां कर्तुमर्हति ।

भ्रातॄणां किं पुनस्तेषां सर्वेषां भूरिसंपदां ॥ ६९९ ॥
द्रोहार्जितास्तु वा लक्ष्मीः सुकृतोपार्जिताथ वा ।
सर्वेषां स्पृहनीयेव तेषां दातृतया तया ॥ ७०० ॥
कृता देवगृहास्तैर्ये तत्पार्श्वेऽन्यसुरास्पदैः ।
दिङ्मातङ्गसमीपस्थकलभौपम्यमाश्रितं ॥ ७०१ ॥
एकोननवते वर्षे स्वस्रीये शान्तिमागते ।
निर्विघ्नभोगास्तेऽभूवन् षट्त्रिंशाब्दात्ययावधि ॥ ७०२ ॥
अथ मम्मोत्पलकयोरुदभूद्दारुणो रणः ।
रुद्धप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः ॥ ७०३ ॥
कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः ।
यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधं ॥ ७०४ ॥
मम्मसूनुर्यशोवर्मा संग्रामाग्रे व्यपाहरत् ।
स यत्र तेजः शूराणां नक्षत्राणामिवार्यमा ॥ ७०५ ॥
अथोत्पाख्याज्जितापीडं संग्रामापीडसंभवः ।
अनङ्गापीडनामाभूत् कृतो मम्मादिभिर्नृपः ॥ ७०६ ॥
मम्मोत्साहासहिष्णुत्वात् संभृतामर्षविकृतः ।
तस्य राज्यं द्विषन्नासीत् सुखवर्मोत्पलात्मजः ॥ ७०७ ॥
वर्षत्रयेणोत्पलके ततः प्रमयमागते ।
स चकारोत्पलापीडमजिताषीडजं नृपं ॥ ७०८ ॥

तेषामाश्वयुजे राजसदृशामो मन्त्रीभुजां ।
भूत्वापि भृत्याः कृतिनो विभूतिं केऽपि लेभिरे ॥ ७०९ ॥
सान्धिविग्रहिकस्तस्य रत्नो नाम विभूतिभाक् ।
तस्मिन् कालेऽपि यश्चक्रे रत्नस्वामिसुरास्पदं ॥ ७१० ॥
भेजुर्दार्वाभिसारादीन् देशानुत्तम्य भूपतां ।
विमलाश्वाग्रामभुजो नराद्या व्यवहारिणः ॥ ७११ ॥
राज्ञां कर्कोटवंश्यानां क्षीणप्रायमभूत् कुलं ।
वंशस्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ ॥ ७१२ ॥
सामर्थ्योपनतप्रायपार्थिवत्वो व्यपद्यत ।
विद्वेषात् सुखवर्माथ शुष्काख्येन स्वबन्धुना ॥ ७१३ ॥
ततः शूराभिधो मन्त्री सुखवर्मात्मजेऽकरोत् ।
राज्ययोग्योऽयमित्यास्थां सगुणेऽवन्तिवर्मणि ॥ ७१४ ॥
एकत्रिंशे स वर्षेऽथ प्रजाविप्लवशान्तये ।
विनिवार्योत्पलापीडं तमेव नृपतिं व्यधात् ॥ ७१५ ॥
यत्कृते विफलक्लेशा आसन् पितृपितामहाः ।
पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्मणा ॥ ७१६ ॥
कुम्भाः पयोनिधिपयोहरणप्रवृत्ता
नित्यं वहन्ति किल ये विफलश्रमत्वं ।
चित्रं तदगादिह तदेकसमुद्भवेन सन्दर्शिता

निखिलवारिधिपानलीला ॥ ७१७ ॥

अभूत तदुरुमूर्द्धि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे ।

कनककटमुखान्नवाभिषेकं झटिति

पतत्तमवन्तिवर्मदेवः ॥ ७१८ ॥

संप्राप्तावुपदेष्टुमिन्दुतपनौ युक्तं स्ववंशोद्भवे-

र्भूपालैर्नवराज्यतत्त्वमिव स श्रोत्रद्वये धारयन् ।

राजा मण्डनकुण्डलद्वयमिषात् स्वच्छातपत्र-

च्छलाल्लक्ष्मीविष्टरपुण्डरीकघटितच्छायोदयो द्युते ॥ ७१९ ।

॥ राजानः ॥ १७ ॥ ग्रन्थाः ॥ ७१९ ॥ आदितः राजानः

॥ ७० ॥ ग्रन्थाः ॥ १७८७ ॥

इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः

कल्हणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥

समाशतद्वये षष्टियुते मासेषु च ।

निर्दशाब्देषु कार्कोटवंशे सप्तदशाभवन् ।

नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः ।
श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ॥ ६३४ ॥
भाष्यव्याख्याक्षणे श्लोकैर्वैलक्षण्यकृतैः कृतः ।
सोऽयं तस्य विपर्यासो बुधैरिव विवर्तितः ॥ ६३५ ॥
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः ।
श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ॥ ६३६ ॥
तूलमूलापकर्ता च चन्द्रभागातटे स्थितः ।
विप्राणां शतमेकोनमशृणोत् तज्जले मृतं ॥ ६३७ ॥
ततोऽग्रहारहरणादेव प्रविरतोऽभवत् ।
वास्तव्यानां कृतां भूमिं न तु निःशेषतो जहौ ॥ ६३८ ॥
अथ विज्ञप्तिसमये तूलमूलौकसो द्विजाः ।
चुक्रुशुर्जातु तस्याग्रे प्रतीहारकराहताः ॥ ६३९ ॥
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः ।
अन्वभावि तदग्रेऽपि ब्राह्मणैर्न विमानना ॥ ६४० ॥
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलं ।
निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ॥ ६४१ ॥
तदाकर्ण्यास्तसामन्तत्यक्तपृष्ठः क्षमापतिः ।
उल्लासितैकभ्रूलेखो दर्पाद्वचनमब्रवीत् ॥ ६४२ ॥
भिक्षाकणभुजां कोऽयं शठानां वो मदज्वरः ।

येनर्षय इव ब्रूथ प्रभावख्यापकं वचः ॥ ६४३ ॥
भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ ।
इरिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः ॥ ६४४ ॥
राजन् युगानुरूपेण भावाभावानुवर्तिनः ।
शासितुस्तेऽनुसारेण न कस्मादृषयो वयं ॥ ६४५ ॥
आह स्म विश्वामित्रो वा वशिष्ठो वा तपोनिधिः ।
त्वमगस्त्योऽथ वा किं स्थ इति दर्पेण तं नृपः ॥ ६४६ ॥
ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः ।
स फणीवोत्फणास्ताम्यन् कोपान्नृपतिमब्रवीत् ॥ ६४७ ॥
भवान् यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा ।
विश्वामित्रमुखेभ्योऽहं तत्रैको भवितुं क्षमः ॥ ६४८ ॥
विहस्योवाच तं राजा विश्वामित्रादिकोपतः ।
हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ॥ ६४९ ॥
पाणिना ताडयन्नुर्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः ।
मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किं ॥ ६५० ॥
तत् श्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत् ।
पततु ब्राह्मदण्डोऽसौ किमद्यापि विलम्बते ॥ ६५१ ॥
नन्वयं पतितो ब्राह्मेत्यथ विप्रेण भाषिते ।
राज्ञः कनकदण्डोऽङ्के वितानस्खलितोऽपतत् ॥ ६५२ ॥

निजैरञ्जलिभिः प्रादाद्विचन्मभ्यः करम्भकं ॥ १६ ॥
साधु भूपेति वक्तव्ये हर्षान्निर्गौरवं द्विजः ।
साध्ववन्तिन्निति वदन्नेकः प्रापाञ्जलीन् बहून् ॥ १७ ॥
लक्ष्मीं कृत्वार्थिसात् कृत्स्नां कृतिनावन्तिवर्मणा ।
विभूतिश्चामरच्छत्रमात्रशेषा व्यधीयत ॥ १८ ॥
अनन्तसंपत्संपन्नभूरिगोत्रजविप्लवे ।
राजश्रीर्दुर्जरा तस्य नववे भूभुजोऽभवत् ॥ १९ ॥
विप्लुतः समरे भ्रातॄन् भ्रातृव्यांश्च विजित्य सः ।
चकार भूरिभिर्वीरैराज्यं विगतकण्टकं ॥ २० ॥
राज्यं निष्पाद्य निर्विघ्नमथ वात्सल्यपेशलः ।
विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियं ॥ २१ ॥
भ्राता द्वैमातुरस्तेन शूरवर्माभिधः सुधीः ।
ज्ञातिप्रियेण वितते यौवराज्येऽभ्यषिच्यत ॥ २२ ॥
खाधूयाहस्तिकर्णाख्यावग्रहारौ प्रदाय यः ।
शूरवर्मा स्वामिनं च गोकुलं च विनिर्ममे ॥ २३ ॥
संपूर्णपुण्यमहिमा मर्त्यमाहात्म्यमन्दिरं ।
पञ्चहस्तप्रदश्चक्रे मठं सुकृतकर्मठः ॥ २४ ॥
भ्राता व्यधत्त नृपतिरपरः समराभिधः ।
केशवं चतुरात्मानं समरस्वामिनं तथा ॥ २५ ॥

द्वौ शूरावरजौ धीरचित्रपाख्यौ निजाख्यया ।
व्यधत्तां विबुधावासौ द्वावन्यौ गणनापती ॥ २६ ॥
भूत्वा बाहुलताछन्नप्रभावानुभवौ भुवि ।
गतौ सविग्रहावेव ह्रावासाय्यसत्यतां ॥ २७ ॥ युग्मं ॥
राजदौवारिकः श्रीमान् शूरस्यासीन्महोदयः ।
महोदयस्वामिनो यः प्रतिष्ठां समपादयत् ॥ २८ ॥
रामजाख्यमुपाध्यायं ख्यातव्याकरणाश्रमं ।
व्याख्यातृपदकं चक्रे स तस्मिन् सुरमन्दिरे ॥ २९ ॥
अमात्येन महीभर्तुः श्रीप्रभाकरवर्मणा ।
कृतं प्रभाकरस्वामिनाम्नोविष्णोर्निकेतनं ॥ ३० ॥
आयातेन शुकैः सार्द्धं दत्ता गृहशुकेन यः ।
मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुकावलीं ॥ ३१ ॥
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा ।
सत्कृत्य विदुषः सभ्यान् देशेऽस्मिन्नवतारिता ॥ ३२ ॥
युग्यैः क्षितिभुजां योग्यैरूह्यमानामहर्द्धयः ।
बुधाः प्रवृद्धसत्कारा भूपतेर्विविशुः सभां ॥ ३३ ॥
मुक्ताकणः शिवस्वामी कविरानन्दवर्द्धनः ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥ ३४ ॥
आस्थाने कृतमन्दारो वन्दी शूरस्य मन्त्रिणः ।

संकल्पस्मृतिमाधातुमिमामार्या सदापठत् ॥ ३५ ॥
अयमवसर उपकृतये प्रकृतिचला यावदस्ति संपदियं ।
विपदि सदाभ्युदयिन्यां पुनरुपकर्तुं कुतोऽवसरः ॥ ३६ ॥
कृतः सुरेश्वरी क्षेत्रे बकुगेहविधायिना ।
शिवयोर्मिश्रयोस्तेन प्रासादः सोऽव्ययस्थितिः ॥ ३७ ॥
शूरेश्वरं प्रतिष्ठाप्य स्ववेश्मेव समुन्नतं ।
चक्रे शूरमठं धीमान् स भोगाय तपस्विनां ॥ ३८ ॥
स्वकृते पत्तनवरे तेन शूरपुराभिधे ।
क्रमवत् तु प्रदेशस्थो ढक्कोऽभूद्विनिवेशितः ॥ ३९ ॥
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरं ।
मठं शूरमठान्तश्च शूरजो रत्नवर्द्धनः ॥ ४० ॥
काव्यदेव्यभिधा शूरबधूः शुद्धान्वया व्यधात् ।
सदाशिवं सुरेश्वर्यां काव्यदेवीश्वराभिधं ॥ ४१ ॥
निर्मत्सरोऽवन्तिवर्मा सोदरेभ्योऽनपायिनीं ।
शूराय च स पुत्राय नृपतिः प्रक्रियां ददौ ॥ ४२ ॥
छन्दानुवर्त्ती भूपालो दैवतस्येव मन्त्रिणः ।
आबाल्याद्वैष्णवोऽप्यासीच्छैवतामुपदर्शयन् ॥ ४३ ॥
क्षेत्रे विश्वैकसाराख्ये मृतानामपवर्गदे ।
भूरिभोगास्पदं राज्ञा तेनावन्तिपुरं कृतं ॥ ४४ ॥

अवन्तिस्वामिनं तत्र प्राग्राज्याधिगमात् कृती ।
विधाय प्राप्तसाम्राज्यश्चक्रेऽवन्तीश्वरं तदा ॥ ४५ ॥
त्रिपुरेश्वरभूतेशविजयेशेषु भूभृता ।
स्नानद्रोण्या रौप्यमय्या तेन पीठत्रयं कृतं ॥ ४६ ॥
शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतं ।
तत्प्रियार्थमुपेक्ष्योऽभूद्धर्मः प्राणाः सुतोऽपि वा ॥ ४७ ॥
तथा चार्चयितुं जातु यातो भूतेश्वरं नृपः ।
विभवानुगुणो स्वस्मिन् पूजोपकरणेऽर्पिते ॥ ४८ ॥
ददर्श पीठे देवस्य पूजकैरुपपादितं ।
बन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितं ॥ ४९ ॥
तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणं ।
व्यजिज्ञपन् क्षितिन्यस्तजानुप्राञ्जलयस्ततः ॥ ५० ॥
डामरो धन्वनामास्ति लहरे विषये बली ।
शूरस्य मन्त्रिणो देवसेवको यः सुतोपमः ॥ ५१ ॥
कृतेषु तेन ग्रामेषु निरवग्रहशक्तिना ।
निवेद्यमेतदेवास्मै भूतेशाय निवेद्यते ॥ ५२ ॥
अकाण्डशूलजनितां पार्थिवः कथयन् व्यथां ।
श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोऽथ निर्ययौ ॥ ५३ ॥
पूजां सन्त्यज्य गमनं शूलं चाकस्मिकं प्रभोः ।

सकेतुकं विदन् शूरो वृत्तान्तान्वेषकोऽभवत् ॥ ५४ ॥
ज्ञाततत्त्वस्ततस्तूर्णं भूतिशाभ्यर्णवर्तिनः ।
क्रुद्धः समातृचक्रस्य भैरवस्याविशद्गृहं ॥ ५५ ॥
निषिद्धजनबाहुल्यो भूत्वा विरलपार्श्वगः ।
प्राहिणोद्धन्वमानेतुं ततो दूतान् पुनःपुनः ॥ ५६ ॥
स क्षितिं पत्तिपृतनासंमर्देन प्रकम्पयन् ।
अप्रकम्पतनुः प्राप क्रूरः शूरान्तिकं पुनः ॥ ५७ ॥
तस्य प्रविष्टमात्रस्य शस्त्रिणः शूरचोदिताः ।
मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवाग्रतः ॥ ५८ ॥
आसन्ने सरसि क्षिप्त्वा रुधिरोद्गारि तद्वपुः ।
क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ ॥ ५९ ॥
तस्य श्रुत्वा शिरश्छिन्नं स्वपुत्रस्येव मन्त्रिणा ।
क्षीणमन्युः क्षितिपतिः सवैलक्ष्य इवाभवत् ॥ ६० ॥
शूरोऽथ पृष्टकुशलो निर्व्यथोऽस्मीति भाषिणं ।
उत्थाप्य तल्पात् तं देवं पूजाशेषमकारयत् ॥ ६१ ॥
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः ।
अनुक्त्वैव हितं तत् तु प्राणांस्त्यक्त्वाप्यसाधयत् ॥ ६२ ॥
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ ।
न दृष्टौ न श्रुतावन्यौ तादृशौ राजमन्त्रिणौ ॥ ६३ ॥

श्रीमेघवाहनस्येव साम्राज्येऽवन्तिवर्मणः ।
अशेषप्राणिनामासीदमारो दशवत्सरान् ॥ ६४ ॥
जलं जन्तुभिः शिशिरं तटान्तस्याकुतोभयैः ।
तत्कालं सेवितः पृष्ठे पाठीनैः शरदातपः ॥ ६५ ॥
अनुग्रहाय लोकानां भट्टाः श्रीकल्लटादयः ।
अवन्तिवर्मणः काले सिद्धा भुवमवातरन् ॥ ६६ ॥
चरित्रे बहुवक्तव्ये येषामेकस्य पावनः ।
अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते ॥ ६७ ॥
देशः प्रबलतोयोऽयं महापद्मसरोजलैः ।
कूलिनीभिश्च शबलः स्वल्पोत्पत्तिः सदाभवत् ॥ ६८ ॥
ललितादित्यभूभर्तुरुद्योगेन बलीयसा ।
किञ्चिदाकृष्टसलिलः प्रापोत्पत्तिं मनाक् ततः ॥ ६९ ॥
जयापीडे क्रमाद्याते स्वल्पवीर्येषु राजसु ।
सलिलोपप्लवैरासीत् पुनरेवावृता क्षितिः ॥ ७० ॥
दीन्नाराणां दशशती पञ्चाशत्यधिकाभवत् ।
धान्यखारीक्रये हेतुर्देशे दुर्भिक्षविक्षते ॥ ७१ ॥
अवन्तिवर्मणः पुण्यैर्जन्तूं चीवयितुं ततः ।
स्वयमन्नपतिः श्रीमान् सुय्यः क्षितिमवातरत् ॥ ७२ ॥
यस्याविज्ञातसंभूतेस्तूर्ये कालेऽपि निश्चितं ।

अयोनिजत्वं कृतिनश्चरितैर्भुवनाद्भुतैः ॥ ७३ ॥
पुरा रथ्यारजःपुञ्जं सम्मार्जन्ती पिधानवत् ।
सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनं ॥ ७४ ॥
तस्मिन् पिधानमुद्धृत्य सापश्यन्मध्यशायिनं ।
बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः ॥ ७५ ॥
मात्रा कयापि त्यक्तोऽसौ सुन्दरो मन्दभाग्यया ।
अथेति चिन्तयन्त्यासीत् सा स्नेहात् प्रस्नुतस्तनी ॥ ७६ ॥
अदूषयन्त्याः स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे ।
तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ॥ ७७ ॥
स सुय्यनामा मतिमान् प्रवृद्धः शिक्षिताक्षरः ।
कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ॥ ७८ ॥
व्रतस्नानादिनियमैस्तं सतां हृदयङ्गमं ।
गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्यवारयन् ॥ ७९ ॥
तेषां कथाव्यवस्थासु निन्दतां जलविप्लवं ।
धीरस्ति मे निरर्थस्तु किं कुर्यामिति सोऽब्रवीत् ॥ ८० ॥
उन्मत्तस्येव वदतस्तस्य तन्नियमवचः ।
निशम्य भूभृच्चारेभ्यश्चिरमासीत् सविस्मयः ॥ ८१ ॥
ततस्तमानीय नृपः किं ब्रूष इति पृष्टवान् ।
धीरस्तीत्यादि राजाग्रेऽप्यवोचत् सोऽप्यसंभ्रमः ॥ ८२ ॥

वातूलोऽसाविति निर्नैरुक्तोऽप्यथ महीपतिः ।
धियं दिदृक्षुर्विदधे तस्यायत्तं निजं धनं ॥ ८३ ॥
कोशाद्दीनारभाण्डानि वक्रुन्यादाय हेलया ।
ययौ मडवराज्यं स नावमारुह्य रंहसा ॥ ८४ ॥
ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे ।
एकं निक्षिप्य दीनारभाण्डं व्यावर्तत द्रुतं ॥ ८५ ॥
सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि ।
वार्त्तां निशम्य तां राजा तन्निष्ठान्वेषकोऽभवत् ॥ ८६ ॥
क्रमराज्यं समं प्राप्य देशे यक्षदराभिधे ।
अञ्जलिभ्यां निचिक्षेप दीनारान् सलिलान्तरे ॥ ८७ ॥
यत्र तीरद्वयालम्भि शैलनिर्लुठिताः शिलाः ।
चक्रुर्वितस्तां निष्पीड्य पयः प्रतिपथोन्मुखं ॥ ८८ ॥
दुर्भिक्षोपहता ग्राम्या दीनारान्वेषिणास्तदा ।
शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ॥ ८९ ॥
एवं दिनानि द्वित्राणि पयो युक्त्या विकृष्य तत् ।
वितस्तामेकतः स्थानात् कर्मकृद्भिरबन्धयत् ॥ ९० ॥
पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा ।
सप्ताहमभवद्बद्धा निखिला नीलजा सरित् ॥ ९१ ॥
अधः प्रवाहं संशोध्य लुठदश्मप्रतिक्रियां ।

कृत्वाबद्धैः शिलाबन्धैः सेतुबन्धमपाठयत् ॥ ९२ ॥
चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति ।
ततः प्रावर्तत जवाद्धल्तुं सागरगामिनी ॥ ९३ ॥
जम्बालाङ्का स्फुरन्मीना भूर्बभौ सलिलोज्झिता ।
व्यक्तकाष्ठर्या सनक्षत्रा निर्मेघेव नभस्थली ॥ ९४ ॥
यत्र यत्र विवेदौघवेधं सलिलविप्लवे ।
तत्र तत्र वितस्तायाः प्रवाहान् नूतनान् व्यधात् ॥ ९५ ॥
मूलस्रोतोग्रनिष्ठूतभूरिस्रोता बभौ सरित् ।
एकभोगाश्रयानेकफणोद्भासितपन्नगी ॥ ९६ ॥
वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु ।
यान्त्यौ ये समगंसातां प्राग्वैन्यस्वामिनोऽन्तिके ॥ ९७ ॥
वर्ततेऽद्य महानद्योः कल्पापायेऽप्यनत्ययः ।
संगमो नगरोपान्ते स सुय्योपक्रमस्तयोः ॥ ९८ ॥
अद्याप्यास्तां फलपुरपरिहासपुरस्थितौ ।
विष्णुस्वामी संगमस्य वैन्यस्वामी च तीरयोः ॥ ९९ ॥
सुन्दरीभवनाभ्यर्णप्राप्तस्याद्यतनस्य तु ।
योगशायी हृषीकेशस्सुय्यस्याभ्यर्चितस्तटे ॥ १०० ॥
दृश्यन्तेऽद्यापि सरितां पूर्वस्रोतस्तटोद्भवाः ।
निषादाकृष्टनौरज्जुरेखाङ्काजीर्णपादपाः ॥ १०१ ॥

स्फुरत्तरङ्गजिह्वाः स नदीर्मार्गमनियन्त्रत् ।
तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ॥ १०२ ॥
बद्ध्वा शैलमयान् सेतून् वितस्तां सप्तयोजनीं ।
महापद्मसरो वारि स चकार नियन्त्रितं ॥ १०३ ॥
महापद्मसरः कुण्डाद्वितस्ता येन योजिता ।
जवान्निर्याति कोदण्डयन्त्रादिषुरिवाधुना ॥ १०४ ॥
उद्धृत्य सलिलादुर्वीमिवमादिवराहवत् ।
अनेकजनसंकीर्णान् ग्रामान् नानाविधान् व्यधात् ॥ १०५ ॥
पालीभिरम्भः संरोध्य यान् कुण्डसदृशान् व्यधात् ।
कुण्डलानीति सर्वान्नसमृद्धान् ब्रुवते जनाः ॥ १०६ ॥
उत्खातकीलनिवहा नद्योऽद्यापि शरत्कृशाः ।
व्यञ्जन्ति जलगन्धेभबन्धनं स्तम्भसन्निभान् ॥ १०७ ॥
दीन्नारभाण्डनीहकीत् स यदगाधजलान्तरे ।
नन्दके निर्गतजले स्थलान्तरात् तदलभ्यत ॥ १०८ ॥
अदेवमातृकान् ग्रामान् परीक्ष्य विविधाः क्षितीः ।
संविभेजे विभक्तेन नादेयेन स वारिणा ॥ १०९ ॥
असिञ्चच्च जलैर्ग्रामान् ग्रामान्मृदमुपाहृतां ।
या यावता क्षणेनागाच्छोषं तां तावता हृदि ॥ ११० ॥
कालेन मत्वा सेकार्हां प्रतिग्रामं जलस्रुतेः ।

परिमाणं विभागं च परिकल्प्य निरत्ययं ॥ १११ ॥
चकार चानूलाद्याभिः सिन्धुभिः सर्वतो दिशः ।
सत्फलोदारकेदारसंपत्संपन्नविभ्रमाः ॥ ११२ ॥ तिलकं ॥
न कश्यपेनोपकृतं न यत्संकर्षणेन वा ।
हेलया मण्डलेऽमुष्मिंस्तत् सुय्येन सुकर्मणा ॥ ११३ ॥
भूमेर्जलादुद्धरणं द्विजक्षेत्रे तथार्पणं ।
सेतुबन्धोऽश्मभिस्तोये यमनं कालियस्य च ॥ ११४ ॥
चतुर्षु सिद्धमिति यद्विष्णोः सत्कर्मजन्मसु ।
सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि ॥ ११५ ॥ युगलकं ॥
यस्मिन् महासुभिक्षेषु दीन्नाराणां शतद्वयी ।
धान्यखारी प्राप्तिहेतुरासर्गादभवत् पुरा ॥ ११६ ॥
ततः प्रभृति तत्रैव चित्रं कस्मीरमण्डले ।
षट्त्रिंशता धान्यखारी दीन्नारैरुदितः क्रयः ॥ ११७ ॥
निर्गताया महापद्मसलिलात् स्वर्गसन्निभं ।
वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनं ॥ ११८ ॥
सुकूता स्थापिता तेन सरसि व्याप्तदिक्तटे ।
आसंसारं स्थिरामारमर्यादा कषपद्धिणां ॥ ११९ ॥
सुय्याकुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् ।
सुय्यामुद्दिश्य तन्नाम्ना सुय्यासेतुं स निर्ममे ॥ १२० ॥

तेनोद्धृतासु सलिलाद्भूषु ग्रामाः सहस्रशः ।
अवन्तिवर्मप्रमुखैर्जयस्थलमुखाः कृताः ॥ १२१ ॥
ईदृशैर्धर्म्यवृत्तान्तैः प्रवर्त्तितकृतोदयः ।
अवन्तिदेवः पाति स्म मान्धातेव वसुन्धरां ॥ १२२ ॥
प्राणप्रयाणसोद्योगरोगग्रस्तस्ततो ययौ ।
क्षेत्रं स त्रिपुरेशाद्रिनिष्ठज्येष्ठेश्वराश्रितं ॥ १२३ ॥
आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपितां ।
प्राणान्ते प्राञ्जलिः शूरो वैष्णावत्वमदर्शयत् ॥ १२४ ॥
तेनान्ते भगवद्गीताः शृण्वता भावितात्मना ।
ध्यायता वैष्णावं धाम निरमुच्यत जीवितं ॥ १२५ ॥
आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापति ।
वर्षे एकोनषष्ठे स क्ष्मावृषाऽस्तमुपाययौ ॥ १२६ ॥
तस्मिन् प्रशान्ते प्रत्येकं विभवोत्सिक्तचेतसां ।
तुल्यमुत्पलवंश्यानां राज्येच्छा भूयसामभूत् ॥ १२७ ॥
ततश्चक्रे प्रतीहारः प्रयत्नाद्रत्नवर्धनः ।
नृपं शङ्करवर्माणामवन्तिनृपतेः सुतं ॥ १२८ ॥
कर्णपो विप्रपामात्यस्तनूजं शूरवर्मणः ।
तद्द्वेषात् सुखवर्माख्यं यौवराज्येऽप्ययोजयत् ॥ १२९ ॥
अतस्तयोरभूद्वैरं क्षितीशयुवराजयोः ।

यस्मिन् क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् ॥ १३० ॥
शिवशक्त्याद्योवीराः स्वामिकार्योज्झितासवः ।
यत्राभूवन् स्वसत्त्वस्य परीक्षाक्षणलाभिनः ॥ १३१ ॥
कुर्वतां स्वामिशत्रूणां दानमानप्रतिग्रहं ।
सर्वैकाग्र्यान्न ते यस्मादानुकूल्यमशिश्रयन् ॥ १३२ ॥
पिण्डस्पृहां परित्यज्यालंकृताः शिक्षिताः क्वचित् ।
तावन्न वीततमसः श्ववृत्तिमनुजीविनः ॥ १३३ ॥
कथञ्चिदथ निर्जित्य युवराजं महौजसं ।
प्राज्यः स्वविजयोद्गारश्चक्रे शङ्करवर्मणा ॥ १३४ ॥
सम्राट् समरवर्माद्यैर्वितीर्णसमरोऽसकृत् ।
कीर्त्तिं श्रिया प्रणयिनीं लब्धयाधिविवेद सः ॥ १३५ ॥
अथ निर्जित्य दायादाल्लब्ध्वा लक्ष्मीं क्षितीश्वरः ।
जिष्णुर्दिग्विजयं कर्तुं श्रीमानासीन्महोद्यमः ॥ १३६ ॥
तस्य कालबलाद्देशे प्रक्षीणजनसंपदि ।
लक्षाणि नवपत्तीनां द्वारान्निष्क्रमतोऽभवन् ॥ १३७ ॥
स्वपुरस्योपकण्ठेऽपि योऽभूत् कुण्ठितशासनः ।
स एव रत्नोत्तंसेषु राज्ञामाज्ञां न्यवेशयत् ॥ १३८ ॥
गच्छन्नाम्नायविच्छेदसंप्रदायः ककुब्जये ।
स्वप्रज्ञया समुन्नीतो राज्ञा शङ्करवर्मणा ॥ १३९ ॥

तत्सेनान्नरनाथानां पृतनाभिः पदे पदे ।
कुल्यापगेव कुल्याभिर्विशन्तीभिरवर्द्धत ॥ १४० ॥
दार्वाभिसारराजेन त्रस्यता समुपाश्रिताः ।
अद्रिद्रोण्यो न वाहिन्यस्तत्सेना नादमादधुः ॥ १४१ ॥
जवोल्वणोर्हरिगणोर्गृह्णन् करिगणं क्षणात् ।
अनासादितदुर्गे स चक्रे दुर्गान्तरातिथिं ॥ १४२ ॥
लक्षाणि नवपत्तीनां वारणानां शतत्रयी ।
लक्षं च वाजिनामासीद्यस्य सेनापुरःसरं ॥ १४३ ॥
स गुर्जरजयव्यग्रः स्वपराभवशङ्किनं ।
त्रैगर्तं पृथिवीचन्द्रं निन्ये तमसि क्षास्यतां ॥ १४४ ॥
पुत्रं भुवनचन्द्राख्यं नीविं प्रागेव दत्तवान् ।
स क्ष्माभृत् प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः ॥ १४५ ॥
अथ तत्कण्ठकं भ्राम्यद्दूरिमण्डलनायकं ।
वीक्ष्य सम्मुखमायान्तं महार्णवमिवोल्वलं ॥ १४६ ॥
सम्प्रगमक्षणे यस्माच्छङ्कमानः स्वबन्धनं ।
पलाय्य प्रययौ दूरं निर्वाणोऽजोविजृम्भितः ॥ १४७ ॥ तिलकं ॥
यमप्रतिमसौन्दर्यमख्याख्याङ्कः पुराविदः ।
तमेवाद्रानुरुत्त्रस्ता नृपाः कालमिवोल्वणां ॥ १४८ ॥
उच्चखानालखानस्य संख्ये गुर्जरभूभुजः ।

बद्धमूलां नृपाल्लक्ष्मीं शुचं दीर्घामरोपयत् ॥ १४९ ॥
तस्मै दत्वा टक्कदेशं विनयादङ्गुलीमिव ।
स्वशरीरमिवापासीन्मण्डलं गुर्जराधिपः ॥ १५० ॥
छत्रं भोजाधिराजेन स साम्राज्यमदापयत् ।
प्रतीहारतया भृत्यीभूते थक्कियकान्वये ॥ १५१ ॥
दरत्तुरुष्काधिपयोर्यः केशरिवराह्वयोः ।
हिमवद्विन्ध्ययोरासीदार्य्यावर्त इवान्तरे ॥ १५२ ॥
नक्षत्रेष्विव भूपेषु नभसीवोत्तरापथे ।
यस्यैव विपुला ख्यातिर्मार्तण्डस्येव मण्डलं ॥ १५३ ॥
स श्रीमाँल्लल्लियः शाहिरलखानाश्रयः क्रुधा ।
निराकरिष्णुः साम्राज्यात् तस्य सेवां न लब्धवान् ॥ १५४ ॥
एवं दिग्विजयं कृत्वा प्राप्तः स निजमण्डलं ।
प्रदेशे पञ्चसत्राख्ये स्वनाम्ना विदधे पुरं ॥ १५५ ॥
तस्य श्रीस्वामिराजस्य तनयोदकपथप्रभोः ।
पूर्णिमेव नृपाब्धेः सुगन्धाख्याभवत् प्रिया ॥ १५६ ॥
तया समं पुरवरे सुरराजोपमो नृपः ।
तस्मिन् शङ्करगौरीशसुगन्धेशौ विनिर्ममे ॥ १५७ ॥
द्विजास्तयोर्नायकाख्यो गौरीशसुरसद्मनोः ।
चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरं ॥ १५८ ॥

परकाव्येन कवयः परद्रव्येण चेश्वराः ।
निर्लोठितेन स्वकृतिं पुष्णान्त्यद्यतने क्षणे ॥ १५९ ॥
स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः ।
सारापहारमकरोत् परिहासपुरस्य यत् ॥ १६० ॥
ख्यातिहेतुः पट्टवानां पशूनां क्रयविक्रयौ ।
इत्यादि यत्पत्तनेऽस्ति तत् तस्मिन् हि पुरेऽभवत् ॥ १६१ ॥
राज्यप्रदेन नृपतेरत्नवर्धनमन्त्रिणा ।
श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ॥ १६२ ॥
चित्रं नृपद्विपाः पूतमूर्तयः कीर्त्तिनिर्झरैः ।
भवन्ति व्यसनासक्तिपांशुस्नानमलीमसाः ॥ १६३ ॥
अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा ।
आधीयमानचित्तोऽभूत् प्रजापीडनपण्डितः ॥ १६४ ॥
आरब्धैर्व्यसनैर्भूम्ना क्षीणकोशः क्षणे क्षणे ।
देवादीनां स सर्वस्वं जहारायामयुक्तिभिः ॥ १६५ ॥
कर्मस्थाने पुरगृह्यग्रामादिधनहारिणा ।
तेनाट्टपतिभागाख्यगृह्यकृत्याभिधे कृते ॥ १६६ ॥
धूपचन्दनतैलादिविक्रयोत्थं समादधे ।
द्रविणं देववेश्मभ्यः क्रयमूल्यकला छलात् ॥ १६७ ॥
प्रत्यवेक्षां मुखे दत्वा विभक्तैरधिकारिभिः ।

चतुःषष्टिं सुरगृहान् मुमोषेतरदञ्जसा ॥ १६८ ॥
ग्रामान् देवगृहग्राह्यान् सद्मा प्रतिकरेण सः ।
स्वयं स्वीकृत्य चोत्पत्तिं क्ष्मां कार्षक इव व्यधात् ॥ १६९ ॥
तुलां कृत्वा त्रिभागोनां वर्षदेयां सपर्षदे ।
भुक्तिकम्बलमूल्यादिदम्भाद्प्यधिकं ददौ ॥ १७० ॥
दिगन्तरस्थो ग्रामीणान् भारमनागतान् ।
तद्देशार्घ्यैर्भारमूल्यं वर्षमेकमदण्डयत् ॥ १७१ ॥
वर्षेऽपरस्मिन् निखिलान् भारमूल्यं निरागसः ।
तयैव संख्यया ग्राम्यान् प्रतिग्राम्यमदण्डयत् ॥ १७२ ॥
इत्येषा मूढभारोढिः प्रथमं तेन पातिता ।
दारिद्र्यदूतीग्रामीणां या त्रयोदशधा स्थिता ॥ १७३ ॥
स्कन्दकग्रामकायस्थमासवृत्त्यादिसंग्रहैः ।
अन्यैश्च विविधायासैर्व्यधाद्ग्रामान् स निर्धनान् ॥ १७४ ॥
तुलापहारोपचयग्रामदण्डादिधसंग्रहैः ।
इत्येष तेन संवाहो गृहकृत्ये प्रवर्तितः ॥ १७५ ॥
व्यधत्त पञ्च शिविरान् स तस्मिन् भिन्नकर्मणि ।
षष्ठं तथा गञ्जवरं शकचं लवटाभिधं ॥ १७६ ॥
आत्मनो निरयं मूढः सोऽङ्गीकृत्येत्युपक्रियां ।
भाविनामकरोद्राज्ञां पापीयस्त्वानियोगिनाम् ॥ १७७ ॥

निमित्तं मण्डलेऽमुष्मिन् सविद्यानामनादरे ।
राज्ञां प्रतापहानौ च मान्यः शङ्करवर्मणः ॥ १७८ ॥
मुख्येन गुणिनां राज्ञां धनहान्या प्रथापहा ।
मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्तिताः ॥ १७९ ॥
तथा कायस्थभोज्या भूर्जाता तत्प्रात्यवेक्षया ।
यथा संज्ञायते वर्णाहरणादिव भूभुजां ॥ १८० ॥
तस्मिन् घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिं ।
पुत्रो गोपालवर्माख्यः कदाचिदिदमब्रवीत् ॥ १८१ ॥
प्रदातुस्तात भवतः पूर्वं न्यासीकृतः स्थितः ।
वरो यः सत्यसन्धस्य सोऽधुना प्रार्थ्यते मया ॥ १८२ ॥
कायस्थप्रेरणादेतैर्देवेनाद्य प्रवर्तितैः ।
आयासैः श्वासशेषैव प्राणवृत्तिः शरीरिणां ॥ १८३ ॥
न च नामास्ति तातस्य काचिल्लोकद्वयोचिता ।
मनागपि हितप्राप्तिरेतया जनपीडया ॥ १८४ ॥
अदृष्टविषयां वार्तां गहनां विवृणोति कः ।
दृष्टेऽप्यनिष्टादन्यन्न कर्मणा तेन दृश्यते ॥ १८५ ॥
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोऽखिलाः ।
प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ॥ १८६ ॥
भूभुजोऽभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते ।

अकालकुसुमस्येव फलसंभावनोज्झिता ॥ १८७ ॥
दानं च सूनृता सूक्तिर्विश्वसंवननं प्रभोः ।
लोभः पूर्वं तयोरेव विनाशाय महोद्यमः ॥ १८८ ॥
प्रतापमायतिं शोभां क्षेमत्त्वाद्धस्य वारिदः ।
स्मृतिशेषां करोत्येव लोभश्च पृथिवीभुजां ॥ १८९ ॥
दायादाद्व्ययभीरुतापरिहृतारब्धैर्भवत्युन्नता
भृत्याः प्रत्युपकारकातरमतेः कुर्युर्न केऽपि प्रियं ।
राशीभूतधनस्य जीवितहृतो शङ्कयतेरन् निजा
भूभर्तुः क्रियते द्विषेव रभसाल्लोभेन किं नाप्रियं ॥ १९० ॥
राजसंवाहमामायं नवायासो जनासुहृत् ।
तदेष लोभप्रभवः प्रजानाथ निवार्यतां ॥ १९१ ॥
श्रुत्वेति राजपुत्त्रस्य सौजन्येनोज्ज्वलं वचः ।
स्मितधौताधरो राजा शनैर्वचनमब्रवीत् ॥ १९२ ॥
तवाकृत्यविसंवादि वचः सौजन्यपेशलं ।
स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीं ॥ १९३ ॥
कुमारभावे पूर्वं मे तवेवार्द्रान्तरात्मनः ।
प्रजावत्सलता वत्स पर्याप्ता पर्यवर्धत ॥ १९४ ॥
सोऽहं घर्मे वहन् वर्म शीतेऽद्वलोष्णमंशुकं ।
पदातिरुपपादत्रः पित्रा संचारितोऽभवं ॥ १९५ ॥

मृगव्याधा कृपेः सार्द्धमटन्तं काण्टकान्तरं ।
अन्तर्वाष्यं मां विलोक्य तमसूयिषुरग्रगाः ॥ १९६ ॥
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्तवान् ।
काले काले सेवकानां ज्ञाने सेवापरिश्रमं ॥ १९७ ॥
ईदृग्दुःखमयं भुक्त्वा ज्ञास्यत्यन्यव्यथां ध्रुवं ।
प्राप्तैश्वर्यो भवेन्मूढो गर्भेश्वरस्तथान्यथा ॥ १९८ ॥
उपायैरीदृशैर्योऽहं कृतः पित्रा सुसिक्षितः ।
तेनापि प्राप्तराज्येन मयेवं पीडिताः प्रजाः ॥ १९९ ॥
गर्भवासव्यथां ज्ञातः शरीरी विस्मरेद्यथा ।
प्राप्तराज्यस्तथा राजा नियतं पूर्वचिन्तनं ॥ २०० ॥
त्वयेव तस्मादेकोऽद्य वरो मह्यं प्रदीयतां ।
प्राप्तराज्यः प्रजापीडां माकार्षीस्त्वमतोऽधिकां ॥ २०१ ॥
सासूयमिति तेनोक्तः कृतान्योन्यस्मितैर्विटैः ।
राजाप्तैर्वीक्षितश्चासीत् कुमारो ह्रीनताननः ॥ २०२ ॥
त्यागभीरुतया तस्मिन् गुणिसङ्गपराङ्मुखे ।
आसेवन्तावरावृत्तीः कवयो भल्लटादयः ॥ २०३ ॥
निर्वेतनाः सुकवयो भारिकोलघटस्त्वभूत् ।
प्रसादात् तस्य दीन्नारसहस्रद्वयवेतनः ॥ २०४ ॥
कल्यपालकुले जन्म तत् तेनैव प्रमाणितं ।

क्षीवोचितापभ्रंशोक्तैर्देवीवाग्यस्य नाभवत् ॥ २०५ ॥
वेष्टितश्मश्रुरुष्णीषे घ्राणस्याग्रे प्रदेशिनी ।
ध्यानैकाग्रा दृगित्यासीत् सुखराजस्य मन्त्रिणः ॥ २०६ ॥
योऽयमार्यैरुचितोवेषो दुर्नयासेविनः प्रभोः ।
छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनां ॥ २०७ ॥ युग्मं ॥
सोऽनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया ।
शूरं दार्वाभिसारेशं शर्वर्यां नरवाहनं ॥ २०८ ॥
प्रजाभिशापे पतिते नृपस्योन्मार्गवर्तिनः ।
त्रिंशद्विंशाः सुतास्तस्य व्यपद्यन्तामयं विना ॥ २०९ ॥
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजां ।
क्षणादेव क्षयं याति प्रजाविप्रियकारिणां ॥ २१० ॥
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत् तु चिन्त्यतां ।
प्रनष्टं तस्य नामापि यथा क्रूरेण कर्मणा ॥ २११ ॥
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरं कृतं ।
कस्यान्यस्याभिधाध्वंसि यथा शङ्करवर्मणः ॥ २१२ ॥
स्वस्रीयः सुखराजस्य तेन द्वाराधिपः कृतः ।
वीरानकाभिधे स्थाने प्रमादादासदद्वधं ॥ २१३ ॥
तत्कोपात् स स्वयं राजा दत्तयात्रो मदोर्जितः ।
वीरानकं समुन्मूल्य प्रविवेशोत्तरापथं ॥ २१४ ॥

सिन्धुकूलाश्रयान् देशान् जित्वा भूरीन् भयातुरैः ।
कृतानतिर्महीपालैः प्रत्यावृत्तोऽभवत् ततः ॥ २१५ ॥
उरशां विशतस्तस्य वास्तव्यैरौरशैः समं ।
निकेतहेतोः सैन्यानामकस्मादुदभूत् कलिः ॥ २१६ ॥
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातितः ।
वेगवाही शरस्तस्य प्रमादादविशद्गलं ॥ २१७ ॥
मुमूर्षुरासान् कटकं संरक्ष्य नयतेति सः ।
उक्त्वा कर्णारिथारूढः स्थानात् तस्माद्विनिर्ययौ ॥ २१८ ॥
हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा ।
क्रन्दन्त्या वपुरालिंग्य स्थितायाः क्षामभाषितः ॥ २१९ ॥
पुत्रं गोपालवर्माख्यं न्यासीकृत्य च रक्षितुं ।
शिशुदेश्यं महादेव्याः सुगन्धाया अबान्धवं ॥ २२० ॥
फाल्गुणे कृष्णसप्तम्यां वत्सरे सप्तसप्ततौ ।
उत्खायमानविशिखो मार्ग एव व्यपद्यत ॥ २२१ ॥ तिलकं ॥
सुखराजादयः सैन्यं रक्षन्तः परभूमिषु ।
वृत्तान्तैर्गोपयन्तस्तं यान्त एवाभवन् पथि ॥ २२२ ॥
तं यन्त्रसूत्रैस्ते मूर्द्ध्रो नम्रतोन्नमतावहैः ।
प्रतिप्रणामं प्राप्तानां सामन्तानामकारयन् ॥ २२३ ॥
षड्भिर्दिनैर्निजे स्थाने प्राप्ते वोल्लासकाभिधे ।

चक्रिरे गतसन्त्रासास्ततस्तस्यान्तसत्क्रियां ॥ २२४ ॥
तिस्रः सुरेन्द्रवत्याद्या राज्ञ्यो राजानमन्वयुः ।
वालावितुः कृतघ्नश्च जयसिंहाह्वयः कृती ॥ २२५ ॥
द्वौ लाडोवग्रसारश्च तं भृत्यावनुजग्मतुः ।
इति सद्विश्विताद्रूढैः सहसाक्रियताग्निसात् ॥ २२६ ॥
ततो जुगोप गोपालवर्मा धार्मिकतोज्ज्वलः ।
सुगन्धया पाल्यमानः सत्यसन्धो वसुन्धरां ॥ २२७ ॥
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि ।
अनतिक्रान्तबाल्योऽपि दुःसंस्कारान् न सोऽग्रहीत् ॥ २२८ ॥
भूपालजननी भोगैर्वैधव्येऽधिकमुन्मदा ।
सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणं ॥ २२९ ॥
तया निर्भरसंभोगप्रीतया स व्यधीयत ।
सौभाग्यपदशृङ्गारमौलिचक्रत्रयाङ्कितः ॥ २३० ॥
कोशाध्यक्षेण राजिण्यास्तस्या लुण्ठितसंपदा ।
तदा भाण्डापुरे तेन शाहिराज्यं व्यधीयत ॥ २३१ ॥
आज्ञातिक्रमिणः शाहेः कृत्वा कमलकाभिधं ।
तोमराणाय स प्रादाद्राज्यं लल्लियसूनवे ॥ २३२ ॥
प्रत्यावृत्तोऽथ नगरं विवेस विजयोर्जितः ।
शौर्यशृङ्गारवसतौ साभिमानः स्वविग्रहे ॥ २३३ ॥

स राजजननीजारः साहंकारो जयार्जनात् ।
मानचतिमधिच्चेपैर्वैरिणां व्यधितान्वहं ॥ २३४ ॥
चुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे ।
तेनावृते संप्रवेशो नाभूदन्यस्य कस्यचित् ॥ २३५ ॥
शनैर्विज्ञातवार्तस्य धनमानापहारकृत् ।
सोऽभूदद्विगतोऽत्यर्थं राज्ञोगोपालवर्मणः ॥ २३६ ॥
विद्यते यन्न गञ्जेऽस्मिंस्तत्सर्वं शाहिविग्रहे ।
गतमित्यब्रवीद्भूपं स कोषगणनोद्यतं ॥ २३७ ॥
अथ गञ्जाधिपो राजभीतः खर्वोदवेदिनं ।
रामदेवाह्वयं बन्धुमभिचारमकारयत् ॥ २३८ ॥
तयाभिचारक्रियया भुक्तभूर्वत्सरद्वयं ।
गोपालवर्मनृपतिर्जातदाहो व्यपद्यत ॥ २३९ ॥
व्यक्तीभूतकुकर्मा स राजदण्डभयाकुलः ।
रामदेवोऽबधीत् पापः स्वयमेव स्वविग्रहं ॥ २४० ॥
रथ्यागृहीतो गोपालवर्मभ्राताथ सङ्कटः ।
बभूव प्राप्तराज्यः स दशभिर्दिवसैर्व्यसुः ॥ २४१ ॥
अथ वंशक्षये वृत्ते राज्ञः शङ्करवर्मणः ।
प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयं ॥ २४२ ॥
गोपालपुरगोपालमठगोपालकेशवान् ।

सा पुरं च स्वनामाङ्कं विदधे धर्मवृद्धये ॥ २४३ ॥
गोपालवर्मणो जाया नन्दानिन्धान्वयोद्भवा ।
शिशुरप्यभवन्नन्दा मठकेशवधारिणी ॥ २४४ ॥
अन्तर्वत्न्याः क्षणे तस्मिन् पत्न्या गोपालवर्मणः ।
जयलक्ष्म्यां बबन्धास्थां श्वश्रूः सन्तानकाङ्क्षिणी ॥ २४५ ॥
तस्यां विपन्नापत्यायां प्रसवान्तेऽतिदुःखिता ।
साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ॥ २४६ ॥
तस्मिन् काले महीपालविग्रहानुग्रहक्षमं ।
तत्र तत्र पदातीनां कृत्यसंकृत्यभूत् कुलं ॥ २४७ ॥
ततः समाश्रितैकाङ्गा स्वयं संवत्सरद्वयं ।
सुगन्धा विदधे राज्यं समन्त्रिवेन तन्त्रिणां ॥ २४८ ॥
योग्याय दातुं साम्राज्यं कस्मैचित् सा किलैकदा ।
मन्त्राय मन्त्रिसामन्तात् तन्त्र्येकाङ्गानठाकयत् ॥ २४९ ॥
अवन्तिवर्मवंशान्ते नप्तारं शूरवर्मणः ।
गर्गायाः स्वकुटुम्बिन्याः संजातं सुखवर्मणा ॥ २५० ॥
अनुव्रतो मे संबन्धिस्नेहादेवं भवेदिति ।
राज्ये निर्जितवर्माख्यं कर्तुं तस्या मनोऽभवत् ॥ २५१ ॥ युग्मं ॥
तया तदुक्तं विषयव्यसनित्वेन जागरात् ।
रात्रौ दिवाशयतया योऽप्यनुत्थानदूषितः ॥ २५२ ॥

नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता ।
इत्युदीर्याभवन् घ्नन्तो यावत् केचन मन्त्रिणः ॥ २५३ ॥
संकेतैर्भेदनिर्यातैस्तावन्निर्जितवर्मणः ।
दशवर्षः कृतो राजा पार्थस्तंत्रिपदातिभिः ॥ २५४ ॥ तिलकं ॥
ते गङ्गाधिपवाक्यानां सुगन्धोत्पाटनात् कृतं ।
प्रायश्चित्तममन्यन्त मानक्षतिविधायिनां ॥ २५५ ॥
सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ ।
कृताधिकारा हारस्य पतितैर्बाष्पविन्दुभिः ॥ २५६ ॥
शरणं प्रत्यभाद्भृत्यो यो यस्तस्याः क्रमागतः ।
तं तमैच्छिष्ट निर्यान्ती विपक्षैः सह संगतं ॥ २५७ ॥
वर्षे एकोननवते संभूयैकाङ्गसैनिकाः ।
गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ॥ २५८ ॥
तामापतन्तीमाकर्ण्य पार्थानुग्राहका मदात् ।
चैत्रान्ते तन्त्रिणः सर्वे निर्ययुः समरोन्मुखाः ॥ ३५९ ॥
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् ।
एकाङ्गान् व्यूढसंघातान् बबन्धुस्तां पलायितां ॥ २६० ॥
निष्पालकविहारान्तस्तैर्बद्धा सा व्यपद्यत ।
अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ॥ २६१ ॥
अस्मिन् धनजनक्षेण्यनिमित्तं मण्डलोत्तमे ।

सर्वतो दिक्षमुत्तस्थावथानर्थपरम्परा ॥ २६२ ॥
जनकः पालको भूत्वा पङ्गुर्बालस्य भूपतेः ।
सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ॥ २६३ ॥
भूभुजो ग्रामकायस्था इवान्योन्यविपाठनं ।
दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ॥ २६४ ॥
यद्राजैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले ।
तन्त्रिणां कुण्डिकादानाद्भूभुजां जीविकाभवत् ॥ २६५ ॥
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा ।
श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ॥ २६६ ॥
तदात्मजाः क्षणे तस्मिन् गच्छन्द्रोहचाक्रिकाः ।
चक्रुर्निगूढराज्येच्छाः प्रजायासैर्धनार्जनं ॥ २६७ ॥ युग्मं ॥
सार्धं सुगन्धादित्येन गूढं शङ्करवर्मनः ।
तेषां ज्येष्ठो बद्धसख्यो मुमोष नृपमन्दिरं ॥ २६८ ॥
क्षीणप्रजे क्षणे तस्मिन् क्षारपात इव क्षते ।
उद्दीपः प्लाविताशेषशरच्छालिरजृम्भत ॥ २६९ ॥
खार्यां सहस्रक्रेयायां दुर्लभे भोजनेऽभवत् ।
वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ॥ २७० ॥
शवैश्चिरप्रविष्टाम्बुसंसेकोच्छूनविग्रहैः ।
वितस्ता सर्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ॥ २७१ ॥

विश्वतोऽस्थिमये जाते नैविद्यात् क्षितिमण्डले ।
सर्वभूतभयाद्यापि श्मशानैक्यमजायत ॥ २७२ ॥
महार्घधान्यसंभारविक्रयप्राप्तसंपदः ।
मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ॥ २७३ ॥
आद्यः क्ष्माभुजः सोऽभून्मन्त्री यस्तादृशीः प्रजाः ।
विक्रीय वाक्ययन्नासीत् तन्त्रिणां कुण्डिकाधनं ॥ २७४ ॥
अटव्यां वृष्टिसंपाते वातवर्षैरुपद्रुतं ।
वह्निः सर्वं जनं पश्यन् कश्चित् प्राप्तोऽग्न्यामन्दिरः ॥ २७५ ॥
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषश्चिरं ।
राजधानीस्थितः पङ्गुः स्वसुखं बह्वमन्यत ॥ २७६ ॥ युग्मं ॥
तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः ।
एवं तस्मिन् क्षणे नीताः संक्षयं राजराक्षसैः ॥ २७७ ॥
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् ।
धारासंपातसंभूताद्बुद्बुदा इव दुर्दिने ॥ २७८ ॥
पार्थः पितरमुत्पाट्य कदाचित् प्राभवत् स्वयं ।
कदाचित् सुतमुत्पाट्य तन्त्रिचक्रिकयाप्यभूत् ॥ २७९ ॥
अप्रीणायत् पङ्गुबधूवडवामण्डलं युवा ।
सुगन्धादित्यवीजाख्यो व्यवायविधिसव्यथा ॥ २८० ॥
राज्यावप्यटदेव्याः स निर्दयैः सुरतोत्सवैः ।

खण्डयामास कण्डूतिं साप्यस्यार्थैषणां धनैः ॥ २८१ ॥
भगिनीभगसौभाग्यबद्धराज्याः स्वयं ददुः ।
यां पङ्ग्वे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ॥ २८२ ॥
सुगन्धादित्यमौत्सुक्यात् सापि देवी मृगावती ।
स्वयं संबुभुजेऽभ्यर्थकान्ताकामितकामिनी ॥ २८३ ॥
पर्यायेणाभवद्भृत्यः स तयोर्भोगवृद्धये ।
दरिद्रयोषितोरेकं भुक्तिपात्रमिवान्वहं ॥ २८४ ॥
पुत्रयो राज्यलाभाय स्पर्द्धयाभ्यां स्वमन्त्रिणे ।
दत्ता निधुवनश्रद्धा धनदानैः सदक्षिणा ॥ २८५ ॥
अथ पार्थं समुत्पाद्य तत्पिता पङ्गुराश्रितः ।
तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः ॥ २८६ ॥
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं ।
चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत ॥ २८७ ॥
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः ।
एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः ॥ २८८ ॥
मातुर्वप्पटदेव्याः स कञ्चित् कालं शिशुर्नृपः ।
मातामह्याः क्षिल्लिकायाः पाल्यस्त्वासीत् समा दश ॥ २८९ ॥
बाल्यादव्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः ।
निर्दोषमासीदण्डस्थफणिलालनसन्निभं ॥ २९० ॥

ज्ञातः पङ्गोर्मृगावत्यां नवमेऽब्देऽथ मन्त्रिभिः ।
चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः ॥ २११ ॥
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः ।
अदत्वा तन्त्रिणां देयं तस्योत्पाटनहेतुताम् ॥ २१२ ॥
अदुर्वृत्तोऽपि स क्ष्माभृद्विना भूरिधनार्पणं ।
गुणवानिव वेश्यानां तन्त्रिणां नाभवत् प्रियः ॥ २१३ ॥
वर्षे गते तमुत्पाट्य दृष्टोत्पत्तितया नृपं ।
बद्धर्यदं पुनः पार्थं व्यधुस्तन्त्रिपदातयः ॥ २१४ ॥
अभूत् साम्बवती वेश्या साम्बेश्वरीविधायिनी ।
पार्थप्रिया तन्त्रिचक्रसंग्रहे ज्ञातचक्रिका ॥ २१५ ॥
कालापेक्षी चक्रवर्मा ततोऽप्यैच्छद्धनं बहु ।
एकादशाब्दस्याषाढे कृतो भूयोऽपि तन्त्रिभिः ॥ २१६ ॥
पार्थादीन् यैः समुत्पाट्य भुक्तं चक्रिकया पुरा ।
तैस्तैः स्थानैश्च ये तेभ्यो जीवनाद्युपलेभिरे ॥ २१७ ॥
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत् ।
संबन्धिभ्योऽपि यैर्दुग्धं कन्यां दत्वेतरेतरं ॥ २१८ ॥
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः ।
मेरुवर्धनपुत्राणामधिकारसमर्पणं ॥ २१९ ॥ तिलकं ॥
कृतोऽक्षपटलाधीशस्तेन शङ्करवर्धनः ।

क्षीवोचितापभ्रंशोक्तेर्देवीवाग्यस्य नाभवत् ॥ २०५ ॥
वेष्टितश्मश्रुरुष्णीषे घ्राणस्याग्रे प्रदेशिनी ।
ध्यानैकाग्रा दृगित्यासीत् सुखराजस्य मन्त्रिणः ॥ २०६ ॥
योऽथमायर्येचितोवेशो दुर्नयासेविनः प्रभोः ।
छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनां ॥ २०७ ॥ युग्मं ॥
सोऽनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया ।
शूरं दार्वाभिसारेशं शर्वर्यां नरवाहनं ॥ २०८ ॥
प्रजाभिशापे पतिते नृपस्योन्मार्गवर्तिनः ।
त्रिंशद्विंशाः सुतास्तस्य व्यपद्यन्तामयं विना ॥ २०९ ॥
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजां ।
क्षणादेव क्षयं याति प्रजाविप्रियकारिणां ॥ २१० ॥
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत् तु चिन्त्यतां ।
प्रनष्टं तस्य नामापि यथा क्रूरेण कर्मणा ॥ २११ ॥
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरं कृतं ।
कस्यान्यस्याभिधाध्वंसि यथा शङ्करवर्मणः ॥ २१२ ॥
स्वस्रीयः सुखराजस्य तेन द्वाराधिपः कृतः ।
वीरानकाभिधे स्थाने प्रमादादासदद्वधं ॥ २१३ ॥
तत्कोपात् स स्वयं राजा दत्तयात्रो मदोर्जितः ।
वीरानकं समुन्मूल्य प्रविवेशोत्तरापथं ॥ २१४ ॥

सिन्धुकूलाश्रयान् देशान् जित्वा भूरीन् भयातुरैः ।
कृताननतिर्महीपालैः प्रत्यावृत्तोऽभवत् ततः ॥ २१५ ॥
उऽशां विशतस्तस्य वास्तव्यैरोरशैःसमं ।
निकेतहेतोः सैन्यानामकस्मादुदभूत् कलिः ॥ २१६ ॥
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातितः ।
वेगवाही शरस्तस्य प्रमादादविशद्गलं ॥ २१७ ॥
मुमूर्षुराप्तान् कटकं संरक्ष्य नयतेति सः ।
उक्त्वा कर्पोरिथारूढः स्थानात् तस्माद्विनिर्ययौ ॥ २१८ ॥
हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा ।
क्रन्दन्त्या वपुरालिंग्य स्थितायाः क्षामभाषितः ॥ २१९ ॥
पुत्रं गोपालवर्माख्यं न्यासीकृत्य च रक्षितुं ।
शिशुदेश्यं महादेव्याः सुगन्धाया अबान्धवं ॥ २२० ॥
फाल्गुणे कृष्णसप्तम्यां वत्सरे सप्तसप्ततौ ।
उत्खायमानविशिखो मार्ग एव व्यपद्यत ॥ २२१ ॥ तिलकं ॥
सुखराजादयः सैन्यं रक्षन्तः परभूमिषु ।
वृत्तान्तगोपयत्नस्त्तं यान्त एवाभवन् पथि ॥ २२२ ॥
तं यन्त्रसूत्रैस्ते मूर्द्धा नम्रतोन्नमतावहैः ।
प्रतिप्रणामं प्राप्तानां सामन्तानामकारयन् ॥ २२३ ॥
षड्भिर्दिनैर्निर्जि स्थाने प्राप्ते वोल्लासकाभिधे ।

चक्रिरे गतसन्त्रासास्ततस्तस्यान्तसत्क्रियां ॥ २२४ ॥
तिस्रः सुरेन्द्रवत्याद्या राज्यो राजानमन्वयुः ।
बालावितुः कृतज्ञस्य जयसिंहाह्वयः कृती ॥ २२५ ॥
द्वौ लाडौवश्रसारश्च तं भृत्यावनुजग्मतुः ।
इति सद्विश्विताद्र्ढैः सद्भसाक्रियताग्निसात् ॥ २२६ ॥
ततो जुगोप गोपालवर्मा धार्मिकतोज्ज्वलः ।
सुगन्धया पाल्यमानः सत्यसन्धो वसुन्धरां ॥ २२७ ॥
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि ।
अनतिक्रान्तबाल्योऽपि दुःसंस्कारान् न सोऽग्रहीत् ॥ २२८ ॥
भूपालजननी भोगैर्वैधव्येऽधिकमुन्मदा ।
सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणां ॥ २२९ ॥
तया निर्भरसंभोगप्रीतया स व्यधीयत ।
सौभाग्यपदशृङ्गारमौलिचक्रत्रयाङ्कितः ॥ २३० ॥
कोशाध्यक्षेण राशिण्यास्तस्या लुण्ठितसंपदा ।
तदा भाण्डापुरे तेन शाहिराज्यं व्यधीयत ॥ २३१ ॥
आज्ञातिक्रमिणः शाहेः कृत्वा कमलकाभिधं ।
तोमराणाय स प्रादाद्राज्यं लक्षियसूनवे ॥ २३२ ॥
प्रत्यावृत्तोऽथ नगरं विवेस विजयोर्जितः ।
शौर्यशृङ्गारवसतो सानभिमानः स्वविग्रहे ॥ २३३ ॥

स राजजननीजारः साहंकारो जयार्जनात् ।
मानन्नतिमधिक्षेपैर्वैरिणां व्यधितान्वहं ॥ २३४ ॥
चुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे ।
तेनावृते संप्रवेशो नाभूदन्यस्य कस्यचित् ॥ २३५ ॥
शनैर्विज्ञातवार्तस्य धनमानापहारकृत् ।
सोऽभूद्विगतोऽत्यर्थं राज्ञोगोपालवर्मणः ॥ २३६ ॥
विद्यते यन्न गञ्जेऽस्मिंस्तत्सर्वं शाहिविग्रहे ।
गतमित्यब्रवीद्रूपं स कोषगणनोद्यतं ॥ २३७ ॥
अथ गञ्जाधिपो राजभीतः खर्वोद्वेदिनं ।
रामदेवाह्वयं बन्धुमभिचारमकारयत् ॥ २३८ ॥
तयाभिचारक्रियया भुक्तभूर्वत्सरद्वयं ।
गोपालवर्मनृपतिर्जातदाहो व्यपद्यत ॥ २३९ ॥
व्यक्तीभूतकुकर्मा स राजदण्डभयाकुलः ।
रामदेवोऽबधीत् पापः स्वयमेव स्वविग्रहं ॥ २४० ॥
रथ्यागृहीतो गोपालवर्मभ्राताथ सङ्कटः ।
बभूव प्राप्तराज्यः स दशभिर्दिवसैर्व्यसुः ॥ २४१ ॥
अथ वंशक्षये वृत्ते राज्ञः शङ्करवर्मणः ।
प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयं ॥ २४२ ॥
गोपालपुरगोपालमठगोपालकेशवान् ।

अद्रीनिव खिलीकृत्य भिन्दयन्तः क्षणे क्षणे ॥ ३३७ ॥
अनयन् क्रीडया व्रीडां माद्यन्तो जीविकाकृते ।
प्रागाहितुण्डिकाः क्रूरा इव ये गर्व्यवृत्तयः ॥ ३३८ ॥
ते तन्त्रिणः क्षणाद्दग्धा गूढवैरविषाग्निना ।
विमानेना विविग्नेन चक्रवर्ममहाहिना ॥ ३३९ ॥ तिलकं ॥
अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणां ।
वीरसंघट्टनं यावदकरोच्छम्भुवर्धनः ॥ ३४० ॥
तावन्मिलितसामन्तसचिवैकाङ्गलालितः ।
सैन्यैर्नानापथायातैर्नदद्भिर्व्याप्तदिक्पथः ॥ ३४१ ॥
वल्गान् मध्येऽश्ववाराणां नृत्यतेवाग्रवाजिना ।
वल्गांकेनोद्वहल्लम्बं शिरस्त्रं वामपाणिना ॥ ३४२ ॥
सस्वेदेतरहस्ताग्रवेष्टनोल्लासनस्पृशः ।
खड्गस्य विम्बितार्कस्य भाभिर्द्योतितकुण्डलः ॥ ३४३ ॥
कवचोत्सेधसंरब्धकण्ठायासेन ताम्यता ।
बद्धभ्रुकुटिबन्धेन वदनेन भयावहः ॥ ३४४ ॥
तर्जयन् कृतझङ्कारांल्लुब्धकांल्लुण्ठितापणान् ।
शिरोऽक्षिसंज्ञया त्रस्तवास्तव्यकृतसान्त्वनः ॥ ३४५ ॥
भेरीरवैः श्रुतिं छिन्दन् पौराशीर्घोषरोधिभिः ।
संग्रामजयशोभाङ्कश्चक्रवर्माविशत् पुरं ॥ ३४६ ॥ कुलकं ॥

तस्मिन् सिंहासनं प्राज्यमाक्रम्यातिजयोर्जिते ।
बद्धा कुतश्चिदानिन्ये भूभटः शम्भुवर्धनं ॥ ३४७ ॥
राज्ञः पुरस्तात् तं शस्त्रपातभिर्मीलितेक्षणां ।
भक्तिं प्रदर्शयन् पापश्चण्डाल इव सोऽबधीत् ॥ ३४८ ॥
उत्क्रान्तां धर्ममर्यादां भृत्यानां जनकोपमान् ।
हन्तुं नरेन्द्रान् द्रोहेण प्रारब्धः शम्भुवर्धनः ॥ ३४९ ॥
प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् ।
अजायत धृतोत्सेको नृशंसविषमक्रियः ॥ ३५० ॥
स्वविक्रमकथास्तोत्ररोमन्थप्रियताहृतः ।
सोऽभवद्विटवन्द्यादिचाटुकारविधेयधीः ॥ ३५१ ॥
आत्मानं दैवतमिव स्तुतिमोहितचेतसः ।
जानतः प्राभवंस्तस्य विवेकविगुणाः क्रियाः ॥ ३५२ ॥
तस्मिन् प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः ।
वैदेशिकोऽभवद्राज्ञा वितीर्णावसरो बहिः ॥ ३५३ ॥
प्राप्तान् सचिवसामन्तान् विन्यस्यन्तो यथाक्रमं ।
प्रतीहारा नृपस्याग्रमनयन्त विविक्ततां ॥ ३५४ ॥
विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला ।
शेषशय्येव मणिभिः कृतालोका फणोद्भवैः ॥ ३५५ ॥
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः ।

प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणं ॥ ३५६ ॥
ज्ञातगीतदिदृक्षाणां गवाक्षावलयो बभुः ।
श्रासवामोदिभिर्वक्त्रैरवरोधमृगीदृशां ॥ ३५७ ॥
हारकङ्कणकेयूरपारिहार्यादिशोभिना ।
स्ववृन्देनानुयातोऽथ प्राविशत् डोम्वगायनः ॥ ३५८ ॥
हंसीनागलताचास्य सुते ललितलोचने ।
चक्रतुः कौतुकोद्ग्रीवां सभां चित्रार्पितामिव ॥ ३५९ ॥
तयोर्विलासवलितैश्चलितापाङ्गविभ्रमैः ।
द्वितीयपुष्पप्रकरो व्यकीर्यत सभान्तरे ॥ ३६० ॥
गायनैर्जयजीवेति कृतकोलाहलैरभूत् ।
सदः सशब्दं कुर्वद्भिस्तत्तन्नृपगुणग्रहं ॥ ३६१ ॥
भुक्तोत्तरोचितोदश्वत्यश्वमस्थानचारिणः ।
वंशेरागविशेषस्य दत्ते स्थाने ततः शनैः ॥ ३६२ ॥
श्रविक्रियशिरःकम्पभ्रुनेत्रभ्रमशोभितः ।
श्रभिन्न इव गायन्त्योर्गीतिध्वनिरजृम्भत ॥ ३६३ ॥
श्रथ ताम्बूलरोमन्थत्यागनिश्चलमूर्तिना ।
ज्ञातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना ॥ ३६४ ॥
गायन्त्यो भावमालम्ब्य तस्य स्निग्धमगायतां ।
श्रधिकोद्रेचिताभिख्यं विलासस्मितविभ्रमैः ॥ ३६५ ॥

राज्ञस्तयोश्च संसक्तश्चित्तयोरितरेतरं ।
दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ॥ ३६६ ॥
नृपं ह्रारितचित्तं तं विज्ञायैकः प्रियो विटः ।
ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ॥ ३६७ ॥
देव गीतमिदं यातं संप्राप्यैते मनोरमे ।
कर्पूरपारीपतितं मैरेयमिव ह्रारितं ॥ ३६८ ॥
गायन्त्योर्मार्जितामेतां रागाद्दन्तचतुष्किकां ।
अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ॥ ३६९ ॥
करन्यस्तकपोलान्तमुद्गायन्त्याविमे ध्रुवं ।
कटाक्षैः कुरुतो व्योम्नि वैमानिकविमोहनं ॥ ३७० ॥
जानन्त्या स्वाश्रयां चर्चामनयोरेकयावयोः ।
असूयास्मितगर्भोऽयं कटाक्षः पश्य पातितः ॥ ३७१ ॥
गायन्त्येकानतमुखी कर्णव्यालोलकुण्डला ।
विपरीतरतोद्रेककृतारम्भेव शोभते ॥ ३७२ ॥
सफलं तस्य तारुण्यमीदृश्यो निर्जने स्त्रियः ।
औत्सुक्याद्विरहे यस्य गायन्त्येवंविधैः स्वरैः ॥ ३७३ ॥
उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः ।
एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते ॥ ३७४ ॥
नेत्रस्य रूपं श्रोत्रस्य ध्वनिं संस्पृशतो न चेत् ।

खण्डयामास कण्डूतिं साध्यस्यार्थैषणां धनैः ॥ २८१ ॥
भगिनीभगसौभाग्यबद्धराज्याः स्वयं ददुः ।
यां पङ्ग्वे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ॥ २८२ ॥
सुगन्धादित्यमौत्सुक्यात् सापि देवी मृगावती ।
स्वयं संबुभुजेऽभ्यर्थकान्ताकामितकामिनी ॥ २८३ ॥
पर्यायेणाभवद्भृत्यः स तयोर्भोगवृद्धये ।
दरिद्रयोषितोरेकं भुक्तिपात्रमिवान्वहं ॥ २८४ ॥
पुत्त्रयो राज्यलाभाय स्पर्द्धयाभ्यां स्वमन्त्रिणो ।
दत्ता निधुवनश्रद्धा धनदानैः सदक्षिणा ॥ २८५ ॥
अथ पार्थं समुत्पाट्य तत्पिता पङ्गुराश्रितः ।
तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः ॥ २८६ ॥
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं ।
चक्रवर्माभिधं रात्ये क्षीणपुण्यो व्यपद्यत ॥ २८७ ॥
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः ।
एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः ॥ २८८ ॥
मातुर्वप्पटदेव्याः स कञ्चित् कालं शिशुर्नृपः ।
मातामह्याः क्षिल्लिकायाः पाल्यस्त्वासीत् समा दश ॥ २८९ ॥
बाल्याद्व्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः ।
निर्दोषमासीदण्डस्थफणिलालनसन्निभं ॥ २९० ॥

ज्ञातः पङ्गोर्मृगावत्यां नवमेऽब्देऽथ मन्त्रिभिः ।
चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः ॥ २११ ॥
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः ।
अदत्वा तन्त्रिणां देयं तस्योत्पाटनकेतुताम् ॥ २१२ ॥
अदुर्वृत्तोऽपि स क्ष्माभृद्विना भूरिधनार्पणम् ।
गुणवानिव वेश्यानां तन्त्रिणां नाभवत् प्रियः ॥ २१३ ॥
वर्षे गते तमुत्पाट्य दृष्टोत्पत्तितया नृपम् ।
बहूर्थदं पुनः पार्थं व्यधुस्तन्त्रिपदातयः ॥ २१४ ॥
अभूत् साम्बवती वेश्या साम्बेश्वरीविधायिनी ।
पार्थप्रिया तन्त्रिचक्रसंग्रहे ज्ञातचक्रिका ॥ २१५ ॥
कालापेक्षी चक्रवर्मा ततोऽप्यैच्छद्धनं बहु ।
एकादशाब्दस्याषाढे कृतो भूयोऽपि तन्त्रिभिः ॥ २१६ ॥
पार्थादीन् यैः समुत्पाट्य भुक्तं चक्रिकया पुरा ।
तैस्तैः स्थानैश्च ये तेभ्यो जीवनाद्युपलेभिरे ॥ २१७ ॥
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत् ।
संबन्धिभ्योऽपि यैर्दुग्धं कन्यां दत्वेतरेतरम् ॥ २१८ ॥
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः ।
मेरुवर्धनपुत्राणामधिकारसमर्पणम् ॥ २१९ ॥ तिलकं ॥
कृतोऽक्षपटलाधीशस्तेन शङ्करवर्धनः ।

तदाच्छादनदृसेच्छा मन्त्रिणः प्राविशन् सभां ॥ ३९१ ॥
केश्चित् क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणं ।
येर्नाशि श्वपकोच्छिष्टं तेऽभूवन् सोमपैः समाः ॥ ३९२ ॥
मण्डलेऽस्मिन् प्रभावोग्रा न देवा न्यवसन् ध्रुवं ।
तद्वेश्मनि तदा नो चेच्छ्वपाकी प्रविशेत् कथं ॥ ३९३ ॥
तां रणस्वामिनं द्रष्टुं तिलद्वादश्यहोगतां ।
सामन्तेभ्यः साभिमानानन्वयुर्डामराः परं ॥ ३९४ ॥
राजकोटुम्बदृप्तानां डोम्बानां निर्गता मुखात् ।
राज्ञामिवाज्ञा दुर्लंघ्या न केनाप्युदलंघ्यत ॥ ३९५ ॥
राज्ञा प्रदत्ते रङ्गाय हेलुग्रामेऽग्रहारवत् ।
लिलेख पट्टोपाध्यायो न यदा दानपट्टकं ॥ ३९६ ॥
तदाक्षपटलं गत्वा रङ्गः कोपात् तमब्रवीत् ।
रङ्गः स हेलुदित्ते(ष्टे)ति दासीसुत न लिख्यते ॥ ३९७ ॥
लिलेख सोऽथ सन्त्रासाद्रङ्गभ्रूभङ्गतर्जितः ।
को न राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः ॥ ३९८ ॥
अन्त्यागमनपापस्य पापः पृच्छन् स निष्कृतिं ।
विटैर्होस्यावहान्येव प्रायश्चित्तानि कारितः ॥ ३९९ ॥
क्रिमिनेव क्रिमिं शाम्येद्दुष्कृतेनैव दुष्कृतं ।
सोऽनुशिष्टोविटैरेवं दधत् पामरसारतां ॥ ४०० ॥

पवित्रास्पर्शतोस्पृश्या स्पर्शपापं जिहीर्षुणा ।
तेनादूष्यत विप्रस्य योषिन्मासोपवासिनः ॥ ४०१ ॥
ततोऽपि पापिनोऽभूवन् केऽपि तस्मिन् क्षणे द्विजाः ।
तस्मादप्यग्रहारान् ये जगृहुर्गृह्यभोजिनः ॥ ४०२ ॥
चक्रे चक्रमठं सोऽपि पापः पाशुपताश्रयं ।
तस्मिन् कृतेऽर्द्धनिष्पन्नं तद्वधूर्यदयोजयत् ॥ ४०३ ॥
पूर्वोपकारान् विस्मृत्य डामरान् स निरागसः ।
नृपतिः श्वपचाकामी विश्वस्तांश्छद्मनावधीत् ॥ ४०४ ॥
कर्त्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः ।
तस्थुस्तस्यान्तिके द्रोहच्छिद्रान्वेक्षणतत्पराः ॥ ४०५ ॥
श्वपाकीशयनावासासन्नावस्करमन्दिरे ।
शौचस्थितं तं निःशस्त्रं ते रात्रौ प्रापुरेकदा ॥ ४०६ ॥
अथ तैः प्राप्तसमयैरकस्मात् तस्य सर्वतः ।
क्षिप्रं न्यपात्यताशेषशातशस्त्रपरम्परा ॥ ४०७ ॥
सुप्तस्तटाद्ध्रदे भ्रष्ट इव निद्रालसेक्षणः ।
प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवान् रवान् ॥ ४०८ ॥
निःशस्त्रः शस्त्रमन्विष्यन् क्षरत्क्षतजनिर्झरः ।
अनुद्रुतोऽरिभिर्धावन् शय्यावेश्म विवेश तत् ॥ ४०९ ॥
अप्राप्तहेतिं क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकं ।

तत्कुचोत्सङ्गलग्नार्द्धं जघ्नुस्ते ऽनुप्रविश्य तं ॥ ४१० ॥
स्वैरेव प्रेरिता दरैस्ते तस्य नृपतेः किल ।
मुमूर्षोर्जानुनी स्वैरं शिलायां समचूर्णयन् ॥ ४११ ॥
त्रयोदशाब्दे ज्येष्ठस्य शुक्लाष्टम्यां जपाल्नणो ।
श्वपाकभोग्यः स श्वेवावस्करे तस्करैर्हतः ॥ ४१२ ॥
उन्मत्तावंतिनामाथ पार्थसूनुर्दुराशयः ।
अभ्यषिच्यत वैधेयैः सचिवैः शर्वटादिभिः ॥ ४१३ ॥
श्वपाकीकामुके पापे निहते निशि तस्करैः ।
प्रजानां पाप्मना सोऽभूत् पापात् पापतरो नृपः ॥ ४१४ ॥
स्थगिता तत्कथापापस्पर्शभीत्या सरस्वती ।
कथंचित् त्रस्नुरश्वेव सेयं प्रस्थाप्यते मया ॥ ४१५ ॥
आसीत् पितृकुलं तस्य भक्ष्यं दुर्नृपरक्षसः ।
और्वाभिधस्य क्रव्याशविशेषस्येव जीवनं ॥ ४१६ ॥
तस्यासंष्टकुराघातसटाङ्कारकरोटिकाः ।
घ्राणास्कन्दादिवाग्भग्नाः सभायां मुख्यमन्त्रिणः ॥ ४१७ ॥
तेऽमात्याश्चारणावेन निर्लज्जास्तमरञ्जयन् ।
कालान्तरेण यैरेव भूमिपालैर्भविष्यते ॥ ४१८ ॥
पर्वगुप्तोऽभवत् तस्य सर्वेभ्योऽप्यधिकं प्रियः ।
आस्थाने नर्तनं कुर्वन्नपाकृतकटीपटः ॥ ४१९ ॥

आतन्विविप्लवाद्दृष्ट्वा कीटप्रायान् महीपतीन् ।
पर्वगुप्तः सर्वदाभूद्राज्यावाप्तिकृतोद्यमः ॥ ४२० ॥
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः ।
पीतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः ॥ ४२१ ॥
भूभटः शर्वटश्चोजः कुमुदः सोऽमृताकरः ।
पर्वगुप्तेन संबन्धं चक्रिरे कोशपीथिनः ॥ ४२२ ॥
गवाक्षसरसि प्राप्तश्री जलो ऽवागलद्विजः
संग्रामडामरगृहे यो रक्तः ख्यातपौरुषः ॥ ४२३ ॥
पदातिमात्रो भूपेन दृष्टशौर्यः स संयुगे ।
महोदरो महाकायः प्रापितो मुख्यमन्त्रितां ॥ ४२४ ॥
यादृशी तेन ददृशे देवी श्रीः सरसोऽन्तरे ।
तादृग्रक्तजया देवीत्यभिधानेन निर्ममे ॥ ४२५ ॥
राज्यं निष्कण्टकं कृत्वा धूर्तेनापजिहीर्षुणा ।
प्रेरितः पर्वगुप्तेन भूभृच्चक्रे कुलक्षयं ॥ ४२६ ॥
तेन लुण्ठितसर्वस्वः पार्थस्तस्थौ कलत्रवान् ।
श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः ॥ ४२७ ॥
शिशून् शङ्करवर्मादीन् भ्रातॄन् द्वारान्निरोध्य सः ।
तत्र स्थितानानशनैरुत्क्रान्तासूनकारयत् ॥ ४२८ ॥
उद्यतः पितरं हन्तुं मन्त्रिणोऽनुमतप्रदान् ।

अक्षीनिव खिलीकृत्य भिन्दयन्तः क्षणे क्षणे ॥ ३३७॥
अनयन् क्रीडया व्रीडां मान्यन्तो जीविकाकृते ।
प्रागाहितुण्डिकाः क्रूरा इव ये गर्ह्यवृत्तयः ॥ ३३८ ॥
ते तन्त्रिणः क्षणाद्दग्धा गूढवैरविषाग्निना ।
विमानेना विविग्नेन चक्रवर्ममहाहिना ॥ ३३९ ॥ तिलकं ॥
अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणां ।
वीरसंघट्टनं यावदकरोच्छम्भुवर्धनः ॥ ३४० ॥
तावन्मिलितसामन्तसचिवैकाङ्गलालितः ।
सैन्यैर्नानापथायातैर्नदद्भिर्व्याप्तदिक्पथः ॥ ३४१ ॥
वल्गान् मध्येऽश्ववाराणां नृत्यतेवाग्रवाजिना ।
वल्गांकेनोद्धहल्लम्बं शिरस्त्रं वामपाणिना ॥ ३४२ ॥
सस्वेदतरहस्ताग्रवेष्टनोल्लासनस्पृशः ।
खड्गस्य विम्बितार्कस्य भाभिर्द्योतितकुण्डलः ॥ ३४३ ॥
कवचोत्सेधसंरब्धकण्ठायासेन ताम्यता ।
बद्धभ्रुकुटिबन्धेन वदनेन भयावहः ॥ ३४४ ॥
तर्जयन् कृतहुङ्कारांल्लुब्धकांल्लुण्ठितापणान् ।
शिरोऽक्षिसंज्ञया त्रस्तवास्तव्यकृतसान्त्वनः ॥ ३४५ ॥
भेरीरवैः श्रुतिं छिन्दन् पौराशीर्घोषरोधिभिः ।
संग्रामजयशोभाङ्कश्चक्रवर्माविशत् पुरं ॥ ३४६ ॥ कुलकं ॥

तस्मिन् सिंहासनं प्राज्यमाक्रम्यातिजयोर्जिते ।
बद्ध्वा कुतश्चिदानिन्ये भूभटः शम्भुवर्धनं ॥ ३४७ ॥
राज्ञः पुरस्तात् तं शस्त्रपातभिर्मीलितेक्षणां ।
भक्तिं प्रदर्शयन् पापश्चण्डाल इव सोऽवधीत् ॥ ३४८ ॥
उल्लङ्घितां धर्ममर्यादां भृत्यानां जनकोपमान् ।
हन्तुं नरेन्द्रान् द्रोहेण प्रारब्धः शम्भुवर्धनः ॥ ३४९ ॥
प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् ।
अजायत धृतोत्सेको नृशंसविषमक्रियः ॥ ३५० ॥
स्वविक्रमकथास्तोत्ररोमन्थप्रियताहृतः ।
सोऽभवद्विटवन्द्यादिचाटुकारविधेयधीः ॥ ३५१ ॥
आत्मानं दैवतमिव स्तुतिमोहितचेतसः ।
जानतः प्राभवंस्तस्य विवेकविगुणाः क्रियाः ॥ ३५२ ॥
तस्मिन् प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः ।
वैदेशिकोऽभवद्राज्ञा वितीर्णावसरो बहिः ॥ ३५३ ॥
प्राप्तान् सचिवसामन्तान् विन्यस्यन्तो यथाक्रमं ।
प्रतीहारा नृपस्याग्रमनयन्त विविक्तताम् ॥ ३५४ ॥
विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला ।
शेषशय्येव मणिभिः कृतालोका फणोद्भवैः ॥ ३५५ ॥
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः ।

आषाढशुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ॥ ४४८ ॥
नवा विरेजे राजश्रीर्बालस्य पृथिवीपतेः ।
कृपाणवेणिललिता छत्रचामरहासिनी ॥ ४४९ ॥
अत्रान्तरे जवायातैश्चारैरावेदितसुतः ।
सामन्तैर्नगरोपान्तं प्राप्तः कमलबर्धनः ॥ ४५० ॥
एकाङ्गतन्त्रिसामन्तस्यालङ्कारकसादिभिः ।
नगरं प्रविशन् श्रान्तः समं सैन्यैररुध्यत ॥ ४५१ ॥
विरुद्धडामरानीकान् युद्ध्वा मार्गेषु निर्गतः ।
श्रान्तोऽप्यसौ वैरिसेनामजयद्विक्रमोर्जितः ॥ ४५२ ॥
सङ्घममश्ववाराणां विद्राव्य तुरगैर्मितैः ।
राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ॥ ४५३ ॥
तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः ।
एकाकिनं क्वाप्यनयज्जननी शिशुभूपतिं ॥ ४५४ ॥
प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः ।
नाभूत् सिंहासनारूढो मूढः कमलवर्द्धनः ॥ ४५५ ॥
तदानीं स्वगृहान् यातो राज्यकामोऽन्यवासरे ।
संघट्टयन् द्विजान् सर्वानचूचुदन्नीतिवित् ॥ ४५६ ॥
प्रौढं शक्तं च कुरुत क्ष्मापं कञ्चित् स्वदेशजं ।
मामेव कुर्युः सामर्थ्यादिति मूढः स चिन्तयन् ॥ ४५७ ॥

एकाकिनीं रहः क्षीवां लब्ध्वा दुर्लभयोषितं ।
अप्रौढोऽनुपभुज्यान्यदिने द्रष्ट्यार्थयेत यः ॥ ४५८ ॥
विभूतिं रभसावाप्तां यश्च सन्त्यज्य तत्क्षणं ।
नीत्या कामयतेऽन्येद्युः शोच्यस्ताभ्यां परोऽस्ति कः ॥४५९॥युग्मं॥
अथोत्पलकुले छिन्ने स्थूलकम्बलवाहिनः ।
अशृङ्गोक्षनिभा विप्राः समगंसत गोकुले ॥ ४६० ॥
धूमनिर्दग्धकूर्चानां राज्ञस्तांस्तांश्चिकीर्षतां ।
राज्यव्यवस्थोपन्यासस्तेषां चिरमवर्द्धत ॥ ४६१ ॥
वैमत्येन मिथस्तेषां नान्यः कोऽप्यभ्यषिच्यत ।
कूर्चाभाषणनिष्ठ्यूतैः स्वकूर्चष्ठीवनैः परं ॥ ४६२ ॥
राज्यार्हान्वेषिभिर्विप्रैः प्राप्तः स्वस्मृतिक्लृप्तये ।
अवार्यतेष्टकाघातैर्मुग्धः कमलवर्धनः ॥ ४६३ ॥
पञ्चषाणि दिनान्येव यावत् तस्थुर्द्विजातयः ।
काहलाकांस्यतालादिवाद्यकोलाहलाकुलं ॥ ४६४ ॥
उत्पताकध्वजच्छत्रशोभियुग्यार्पितासनं ।
अशेषं पारिषद्यानां तावत् तत्रामिलद्बलं ॥ ४६५ ॥ युग्मं॥
स्वपत्नीं बन्धकीभूतामिवान्यवशवर्त्तिनीं ।
वीक्ष्य राजश्रियं शोचन्नासीत् कमलवर्धनः ॥ ४६६ ॥
पितृघातिवधूप्रच्छन्नपुत्रराज्यार्थिनी ततः ।

तदङ्गस्यान्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः ॥ ३७५ ॥
अभिलाषाङ्कुरः सिक्त इव तैर्विटभाषितैः ।
राज्ञः स्वभावलोलस्य शतशाखत्वमाययौ ॥ ३७६ ॥
ये विस्तारितवर्णसंकररुचः सन्दर्श्य गोत्रान्तकृद्-
बद्धावस्थितिचापलं घनमलं पार्श्वे ध्वनन्त्युद्धताः ।
नीयन्ते विपथावपातपरतां लब्धोदयैस्तैः क्षणात्
सिक्ता वारिधरैरमी च रभसाद्भूपालसिक्ता विटैः ॥ ३७७ ॥
वस्तुक्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा
जडान् यदि विमोहयितुं समर्थाः ।
न स्युर्विटा अथ कुतर्कपथस्थिताश्च
नित्योद्वसेषु निरयेषु मृगाश्चरेयुः ॥ ३७८ ॥
सन्तोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलं ।
अमार्गत्यागराधेयः शुद्धात्मगमन्नृपः ॥ ३७९ ॥
कान्तोऽस्याः क्षितिवल्लभोऽयमभिधेत्युर्वीपतेरेकतो
ब्रूतेऽसावतिचण्डताण्डवयुतं डोम्बः स्वनामान्यतः ।
मध्ये यत् किमपीति गीतिरचना काव्यं यदेतद्विदो यल्लक्ष्मीं
क्षपयन्ति तान्धिगबुधान् कीर्त्यर्थिनः पार्थिवान् ॥ ३८० ॥
वेश्यानुरागस्य महेन्द्रचापधाम्नो हरिद्रारसरञ्जनस्य ।
उपाङ्गगीतस्य च हारिणोऽपि सौन्दर्यमस्थैर्यहतप्रकर्षं ॥ ३८१ ॥

दर्शनाभ्याससंवृद्धचक्षूरागः क्षमापतिः ।
विना श्वपाककन्ये ते न पुनः प्राप निर्वृतिं ॥ ३८२ ॥
गायन्त्यौ शयनोपान्ते शनैर्विहितचुम्बनं ।
नृपं रतिसुखाभिज्ञं तं हठात् ते प्रचक्रतुः ॥ ३८३ ॥
समागमेन नव्येन तयोर्वैयात्यशोभिना ।
चक्रे क्षपितसामर्थ्यः स लज्जोद्वहनाक्षमः ॥ ३८४ ॥
रत्यन्तसुलभोद्भेदैर्निस्सृतैः स्वेदबिन्दुभिः ।
भाग्योष्मसंक्षयजडं वपुस्तस्य व्यधीयत ॥ ३८५ ॥
रागान्धेन कृता हंसी महादेवी महीभुजा ।
भेजे राजबधूमध्ये वालव्यजनवीजनं ॥ ३८६ ॥
तस्या यैर्भुक्तमुच्छिष्टं ते यथा चक्रवर्मणः ।
नृपान्तराणामन्येषामप्यभूवन् सभासदः ॥ ३८७ ॥
मन्त्रिणामक्षपटलप्रख्यमुख्याधिकारदा ।
प्रवृद्धिहेतुतां प्राप डोम्बसेवनचक्रिका ॥ ३८८ ॥
मौर्ख्यात् सचिवतां केचिच्छ्वपाका न व्यधुः स्वयं ।
केचित्त्वकुर्वन्नीतिज्ञा राजकार्याणि मन्त्रिवत् ॥ ३८९ ॥
मन्त्रिणस्तस्करा राज्ञी श्वपाकी श्वपचाः प्रियाः ।
किं न लोकोत्तरमभूद्भूपतेश्चक्रवर्मणः ॥ ३९० ॥
ऋतुस्नातार्तवाङ्गानि श्वपाकी स्वांशुकान्यदात् ।

तदाच्छादनदक्षेच्छा मन्त्रिणः प्राविशन् सभां ॥ ३९१ ॥
केश्चित् क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणं ।
येर्नाशि श्वपकोच्छिष्टं तेऽभूवन् सोमपैः समाः ॥ ३९२ ॥
मण्डलेऽस्मिन् प्रभावोग्रा न देवा न्यवसन् ध्रुवं ।
तद्वेश्मनि तदा नो चेच्छ्वपाकी प्रविशेत् कथं ॥ ३९३ ॥
तां रणस्वामिनं द्रष्टुं तिलद्वादश्यह्नोगतां ।
सामन्तेभ्यः साभिमानानन्वयुर्डामराः परं ॥ ३९४ ॥
राजकोटुम्बदासानां डोम्बानां निर्गता मुखात् ।
राज्ञामिवाज्ञा दुर्लङ्घ्या न केनाप्युदलंघ्यत ॥ ३९५ ॥
राज्ञा प्रदत्ते रङ्गाय हेलुग्रामेऽग्रहारवत् ।
लिलेख पट्टोपाध्यायो न यदा दानपट्टकं ॥ ३९६ ॥
तदाक्षपटलं गत्वा रङ्गः कोपात् तमब्रवीत् ।
रङ्गः स हेलुदिण्णेति दासीसुत न लिख्यते ॥ ३९७ ॥
लिलेख सोऽथ सन्त्रासाद्रङ्गभ्रूभङ्गतर्जितः ।
को न राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः ॥ ३९८ ॥
अन्त्यागमनपापस्य पापः पृच्छन् स निष्कृतिं ।
विटैर्हास्यावहान्येव प्रायश्चित्तानि कारितः ॥ ३९९ ॥
क्रिमिणैव क्रिमिं शाम्येद्दुष्कृतेनैव दुष्कृतं ।
सोऽनुशिष्टोविटैरेवं दधत् पामरसारतां ॥ ४०० ॥

पवित्रास्पर्शतोऽस्पृश्या स्पर्शपापं जिहीर्षुणा ।
तेनादूष्यत विप्रस्य योषिन्मासोपवासिनः ॥ ४०१ ॥
ततोऽपि पापिनोऽभूवन् केऽपि तस्मिन् क्षणे द्विजाः ।
तस्मादप्यग्रहारान् ये जगृहुर्गृहभोजिनः ॥ ४०२ ॥
चक्रे चक्रमठं सोऽपि पापः पाशुपताश्रयं ।
तस्मिन् कृतेऽर्द्धनिष्पन्नं तद्वधूर्यद्योजयत् ॥ ४०३ ॥
पूर्वोपकारान् विस्मृत्य डामरान् स निरागसः ।
नृपतिः श्वपचाकामी विश्वस्तांश्छद्मनावधीत् ॥ ४०४ ॥
हन्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः ।
तस्थुस्तस्यान्तिके द्रोहच्छिद्रानेहःप्रतीक्षिणः ॥ ४०५ ॥
श्वपाकीशयनावासासन्नावस्करमन्दिरे ।
शौचस्थितं तं निःशस्त्रं ते रात्रौ प्रापुरेकदा ॥ ४०६ ॥
अथ तैः प्राप्तसमयैरकस्मात् तस्य सर्वतः ।
क्षिप्रं न्यपात्यताशेषघातशस्त्रपरम्परा ॥ ४०७ ॥
सुप्तस्तटाद्ध्रदे भ्रष्ट इव निद्रालसेक्षणः ।
प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवान् रवान् ॥ ४०८ ॥
निःशस्त्रः शस्त्रमन्विष्यन् क्षरत्क्षतजनिर्झरः ।
अनुद्रुतोऽरिभिर्धावन् शय्यावेश्म विवेश तत् ॥ ४०९ ॥
अप्राप्तहेतिं क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकं ।

तत्कुचोत्सङ्गलग्नार्द्धं जघ्नुस्तेऽनुप्रविश्य तं ॥ ४१० ॥
स्वैरेव प्रेरिता दारैस्ते तस्य नृपतेः किल ।
मुमूर्षोर्जानुनी स्वैरं शिलायां समचूर्णयन् ॥ ४११ ॥
त्रयोदशाब्दे ज्येष्ठस्य शुक्लाष्टम्यां नृपाधमः ।
श्वपाकभोग्यः स श्वेवावस्करे तस्करैर्हतः ॥ ४१२ ॥
उन्मत्तावंतिनामाथ पार्थसूनुर्दुराशयः ।
अभ्यषिच्यत वैधेयैः सचिवैः शर्वटादिभिः ॥ ४१३ ॥
श्वपाकीकामुके पापे निहते निशि तस्करैः ।
प्रजानां पाप्मना सोऽभूत् पापात् पापतरो नृपः ॥ ४१४ ॥
स्थगिता तत्कथापापस्पर्शभीत्या सरस्वती ।
कथंचित् त्रस्तुरश्वेव सेयं प्रस्थाप्यते मया ॥ ४१५ ॥
आसीत् पितृकुलं तस्य भक्ष्यं दुर्नृपरक्षसः ।
और्वाभिधस्य क्रव्याशविशेषस्येव जीवनं ॥ ४१६ ॥
तस्यासंष्टकुराघातसटाङ्कारकरोटिकाः ।
घ्राणास्कन्दादिवाग्यज्ञाः सभायां मुख्यमन्त्रिणः ॥ ४१७ ॥
तेऽमात्याश्चारणत्वेन निर्लज्जास्तमरञ्जयन् ।
कालान्तरेण यैरेव भूमिपालैर्भविष्यते ॥ ४१८ ॥
पर्वगुप्तोऽभवत् तस्य सर्वेभ्योऽप्यधिकं प्रियः ।
आस्थाने नर्तनं कुर्वन्नपाकृतकटीपटः ॥ ४१९ ॥

आतन्त्रिविप्लवाद्दृष्ट्वा कीटप्रायान् महीपतीन् ।
पर्वगुप्तः सर्वदाभूद्राज्यावाप्तिकृतोद्यमः ॥ ४२० ॥
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः ।
पीतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः ॥ ४२१ ॥
भूभटः शर्वटश्चोज्जः कुमुदः सोऽमृताकरः ।
पर्वगुप्तेन संबन्धं चक्रिरे कोशपीथिनः ॥ ४२२ ॥
गवाक्षसरसि प्राप्तश्री जलो ऽवागलद्विजः
संग्रामडामरगृहे यो रक्कः ख्यातपौरुषः ॥ ४२३ ॥
पदातिमात्रो भूपेन दृष्टशौर्यः स संयुगे ।
महोदरो महाकायः प्रापितो मुख्यमन्त्रितां ॥ ४२४ ॥
यादृशी तेन ददृशे देवी श्रीः सरसोऽन्तरे ।
तादृग्रक्कजया देवीत्यभिधानेन निर्ममे ॥ ४२५ ॥
राज्यं निष्कण्ठकं कृत्वा धूर्तेनापजिहीर्षुणा ।
प्रेरितः पर्वगुप्तेन भूभृच्चक्रे कुलक्षयं ॥ ४२६ ॥
तेन लुण्ठितसर्वस्वः पार्थस्तस्थौ कलत्रवान् ।
श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः ॥ ४२७ ॥
शिशून् शङ्करवर्मादीन् भ्रातॄन् द्वारान्निरोध्य सः ।
तत्र स्थितानशनैरुत्क्रान्तासूनकारयत् ॥ ४२८ ॥
उद्यतः पितरं हन्तुं मन्त्रिणोऽनुमतप्रदान् ।

बद्धपटान् व्यधाद्बद्धनिगडानितरान् पुनः ॥ ४२९ ॥
एकदा मन्त्रिसामन्ततन्त्रिकायस्थसैनिकाः ।
पार्थं तदाज्ञामासाद्य निशायां पर्यवेष्टयन् ॥ ४३० ॥
स्नानक्षीणां वरां पत्नीं रुद्धद्वारां निपात्यते ।
आलिंग्यमानां क्रन्दद्भिस्तर्णकैरिव दारकैः ॥ ४३१ ॥
केशानालम्ब्य कर्षन्तः शर्करोत्पाटिताङ्गकं ।
विपन्नं गोकुलाद्दान्तमिव निर्कृत्य तं गृहात् ॥ ४३२ ॥
क्षुत्क्षामरुक्मं क्रन्दन्तं निजघुर्नग्नविग्रहं ।
चण्डाला इव निःशस्त्रं कुमुदाद्या नृपप्रियाः ॥ ४३३ ॥
पितरं निहतं श्रुत्वा राजा संजातकौतुकः ।
प्रातः स्वसचिवैः सार्द्धं गत्वा क्रुष्टोऽथ दृष्टवान् ॥ ४३४ ॥
अत्राङ्गेऽस्य प्रहारोऽयं मद्दत्त इति वादिनः ।
तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमं ॥ ४३५ ॥
न्यक्कृत्य स्वीकृतो राज्ञा तदा तद्दत्तनोद्यताः ।
अचूचुदत् पर्वगुप्तो देवगुप्ताभिधं सुतं ॥ ४३६ ॥
पार्थस्य निहतस्याङ्गे सोऽक्षिपत् क्षुरिकां ततः ।
रञ्जितो येन भूपालो जातहासोऽभवच्चिरं ॥ ४३७ ॥
डामरैर्लुण्ठितो देशः प्रणाशे चक्रवर्मणः ।
उत्थाप्य पापकायस्थांस्तेन भूयोऽपि दण्डितः ॥ ४३८ ॥

संप्रेरितः कुसचिवैः शस्त्राभ्यासं चकार सः ।
पाटयन् छुरिकाघातैः कोटवीस्तनकोटरं ॥ ४३९ ॥
गर्भिणीनां च जठरं गर्भान् द्रष्टुमपाटयत् ।
काठिन्यस्य परीक्षार्थमङ्गं कर्मकृतामपि ॥ ४४० ॥
प्रतिग्रहाग्रहाद्घोराद्बद्धा बधभयाद्द्विजाः ।
प्रत्यगृह्णन्नग्रहारांस्तस्मादपि नृपाधमात् ॥ ४४१ ॥
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः ।
तेनानुबाध्यमानोऽभूदपर्यन्तव्यथातुरः ॥ ४४२ ॥
व्यथया तस्य तादृश्या प्रजा एव न केवलं ।
तुतुषुर्निजशुद्धान्तमहिष्योऽपि चतुर्दश ॥ ४४३ ॥
अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः ।
क्षितिपालात् प्रजातोऽयमिति प्रख्यापितो मृषा ॥ ४४४ ॥
तं शिशुं शूरवर्माख्यं विनिवेश्य नृपासने ।
हस्ते निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणां ॥ ४४५ ॥
कम्पनाधिपतेर्बद्धद्वेषः कमलबर्धमात् ।
बिभ्यन् मडवराज्यस्थात् डामरोत्पाटनक्षमात् ॥ ४४६ ॥
आसन्ननिरयप्राप्तिः पितृहा पार्थिवाधमः ।
शुचौ पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ॥ ४४७ ॥ चतुर्भिः कुलकं ॥
पितृघातिसुतो राज्ञा जयस्वामिविरोचनं ।

आषाढशुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ॥ ४४८ ॥
नवा विरेजे राजश्रीर्बालस्य पृथिवीपतेः ।
कृपाणवेणिललिता छत्रचामरहासिनी ॥ ४४९ ॥
अत्रान्तरे जवायातैश्चारैरावेदितसुतः ।
सामन्तैर्नगरोपान्तं प्राप्तः कमलबर्धनः ॥ ४५० ॥
एकाङ्गतन्त्रिसामन्तस्यालङ्कारकसादिभिः ।
नगरं प्रविशन् श्रान्तः समं सैन्यैररुध्यत ॥ ४५१ ॥
विरुद्धडामरानीकान् युद्ध्वा मार्गेषु निर्गतः ।
श्रान्तोऽप्यसौ वैरिसेनामजयद्विक्रमोर्जितः ॥ ४५२ ॥
सहस्रमश्ववाराणां विद्राव्य तुरगैर्मितैः ।
राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ॥ ४५३ ॥
तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः ।
एकाकिनं क्वाप्यनयज्जननी शिशुभूपतिं ॥ ४५४ ॥
प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः ।
नाभूत् सिंहासनारूढो मूढः कमलवर्द्धनः ॥ ४५५ ॥
तदानीं स्वगृहान् यातो राज्यकामोऽन्यवासरे ।
संघट्टयन् द्विजान् सर्वानचूचुदद्नीतिवित् ॥ ४५६ ॥
प्रौढं शक्तं च कुरुत क्ष्मापं कञ्चित् स्वदेशजं ।
मामेव कुर्युः सामर्थ्यादिति मूढः स चिन्तयन् ॥ ४५७ ॥

एकाकिनीं रहः स्त्रीवां लब्ध्वा दुर्लभयोषितं ।
अप्रौढोऽनुपभुञ्ज्यान्यदिने द्रूत्यार्थयेत्त यः ॥ ४५८ ॥
विभूतिं रभसावाप्तां यश्च सन्त्यज्य तत्क्षणं ।
नीत्या कामयतेऽन्येद्युः शोच्यस्ताभ्यां परोऽस्ति कः ॥४५९॥ युग्मं॥
अथोत्पलकुले छिन्ने स्थूलकम्बलवाहिनः ।
अशृङ्गोक्षनिभा विप्राः समगंसत गोकुले ॥ ४६० ॥
धूमनिर्दग्धकूर्च्चानां राज्ञस्तांस्तांश्चिकीर्षतां ।
राज्यव्यवस्थोपन्यासस्तेषां चिरमवर्द्धत ॥ ४६१ ॥
वैमत्येन मिथस्तेषां नान्यः कोऽप्यभ्यषिच्यत ।
कूर्चाभाषणनिष्ठ्यूतैः स्वकूर्चष्ठीवनैः परं ॥ ४६२ ॥
राज्यार्हान्वेषिभिर्विप्रैः प्राप्तः स्वस्मृतिलृप्तये ।
अवार्यतेष्टकाघातैर्मुग्धः कमलवर्धनः ॥ ४६३ ॥
पञ्चषाणि दिनान्येव यावत् तस्थुर्द्विजातयः ।
काहलाकांस्यतालादिवाद्यकोलाहलाकुलं ॥ ४६४ ॥
उत्पताकध्वजच्छत्रशोभियुग्यार्पितासनं ।
अशेषं पारिषद्यानां तावत् तत्रामिलद्बलं ॥ ४६५ ॥ युग्मं॥
स्वपत्नीं बन्धकीभूतामिवान्यवशवर्त्तिनीं ।
वीक्ष्य राजश्रियं शोचन्नासीत् कमलवर्धनः ॥ ४६६ ॥
पितृघातिवधूच्छन्नपुत्रराज्यार्थिनी ततः ।

प्राक्षिपोद्राजपुरुषान् पार्श्वे प्रायोपवेशिनां ॥ ४६७ ॥
पिशाचकपुरे ग्रामे वीरदेवाभिधस्य यः ।
कुटुम्बिनः कामदेवनामा सूनुरजायत ॥ ४६८ ॥
स शिक्षिताक्षरो लब्ध्वा मेरुवर्धनमन्दिरे ।
बालाध्यापकतां स्नानशीलादिगुणभूषितः ॥ ४६९ ॥
क्रमाद्गञ्जाधिकार्यासीदथ तस्यात्मजः शनैः ।
लेभे गञ्जाधिकारित्वं राज्ञः शङ्करवर्मणः ॥ ४७० ॥
यः प्रभाकरदेवोऽपि सुगन्धाछन्नकामुकः ।
लक्ष्म्या सरस्वतीद्विषाद्देशविप्लवतोऽथवः ॥ ४७१ ॥
विद्वान् यशस्करो नाम तत्पुत्रोऽत्यन्तदुर्गतः ।
सख्या फल्गुणकाख्येन समं देशान्तरं गतः ॥ ४७२ ॥
सुस्वप्नदर्शनैः पीठदेव्याशीर्भिश्च कर्षुलः ।
तस्मिन् प्रसङ्गे सोत्साहः प्रत्यावृत्तो निजां भुवं ॥ ४७३ ॥
पितृघातिबधूद्वृत्तैर्यातैर्बोधयितुं द्विजान् ।
मध्ये गृहीत्वा वाग्मित्वात् प्रविवेश तदन्तिकं ॥ ४७४ ॥ कुलकं ॥
दृष्ट्वैव तं दैववशादेकमत्यस्पृशो द्विजाः ।
ध्वनिं राजायमेवास्त्वित्युच्चकैरुदचारयन् ॥ ४७५ ॥
अथाभ्यषिच्यत क्षिप्रं विप्रैरेत्य यशस्करः ।
क्ष्माधृतिः प्रौढसामर्थ्यः सानुमानिव तोयदैः ॥ ४७६ ॥

दग्धं वेणुवनं परस्परमहासंघर्षजेनाग्निना
तन्मूलोद्धृतिरम्भसा क्षणधृतोद्रेकेण संपादिता ।
वात्यावेगविपाटितं विटपिनं प्राप्तं कुतश्चिद्दृढं क्षितिं
नेतुमहो महाद्रिकुहरे धात्रा न किं सूत्रितं ॥ ४७७ ॥
भृत्यप्रेरणया वंशं पार्थजः स्वं न चेद्दहेत् ।
तत्पुत्रोत्पाटनं कुर्यान्नचेत् कमलवर्धनः ॥ ४७८ ॥
अनुच्चकुलजातस्य दरिद्रस्याटतः क्षितिं ।
तद्यशस्करदेवस्य राज्यप्राप्तिः कथं भवेत् ॥ ४७९ ॥
पद्भ्यां व्रजन् निरनुगो ददृशे जनेन
यस्तत्क्षणं निखिललोकसमानकीर्तिः ।
साम्राज्यरम्यममुमीक्षितुमास्त
नारीदृङ्नीरजस्तवकितो नरनाथमार्गः ॥ ४८० ॥
नृपतिवसतिं प्रत्यागच्छन् यशस्करभूपतिः
पुरमृगदृशामाशीर्मध्ये वचोऽपि विवक्षितं ।
स्तिमितवलितापाङ्गं शृण्वन् निमीलदहंकृतिः
कृतपरिकरस्तज्ज्ञैर्जज्ञे प्रजापरिपालने ॥ ४८१ ॥
प्रतिमितरविदीपोद्दामशुभ्रातपत्र-
प्रचयरजतपात्रासूत्रितारात्रिकाश्रीः ।
अथ मुखरितमाशीर्मङ्गलैरङ्गनानाम्

अवनिहरिणधामा राजधाम प्रपेदे ॥ ४८३ ॥

इति श्रीकाश्मीरिक महामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां पञ्चमस्तरङ्गः। राजानः आदितः ॥११८॥

अधिकायां समाशीतिः मासेषु च चतुर्ष्वगात्।

कल्पपालाष्टकं रथ्याकृतस्त्रीसचिवा अपि।



## ॥ अथ षष्ठस्तरङ्गः ॥

नेदं पर्णसमीरणाशनतपोमाहात्म्यमुच्चोरगो
पश्यैतावत एव संप्रति कृतो तन्मात्रवृत्ती बहिः ।
प्रेम्णोवार्द्धमिदं चराचरगुरोः प्रापेयमात्मस्तुतीरिवं ।
देवबधूमुखाच्छ्रुतिसुखाः शृण्वन्त्यपर्णा वतात् ॥ १ ॥
इच्छन्नलंघनीयत्वमथ कन्यां विलंघयन् ।
प्रतीहारान् द्विजा दूरं वार्यन्तामिति सोऽन्वशात् ॥ २ ॥
वेत्रिवित्रास्यमानांस्तु तान् कृताञ्जलिरब्रवीत् ।
राज्यप्रदाश्च पूज्याश्च यूयं नो दैवतैः समाः ॥ ३ ॥
राज्यदानाभिमानेन वर्तिष्यत मदोद्धताः ।
यत्कार्यकालादन्यत्र नागन्तव्यं मदन्तिकं ॥ ४ ॥
तदाकर्ण्याखिलोलोकस्तमदृश्यममन्यत ।
व्यस्मरत् सहसंवाससंभूतमपि लाघवं ॥ ५ ॥
खिलीभूताः पूर्वराजव्यवस्था प्रतिभाबलात् ।
उन्नीतवान् स सुकविः प्राक्कविप्रक्रिया इव ॥ ६ ॥
अचोराभूत् तथा भूमिर्यथा रात्रौ वणिक्पथाः ।
अतिष्ठन् विवृतद्वारा मार्गाश्चाविघ्नताध्वगाः ॥ ७ ॥

प्रत्यवेक्षापरे तस्मिन्नासीत् सर्वापकारिणां ।
कृष्यध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनां ॥ ८ ॥
ग्राम्याः कृषिपराधीना नापश्यन् राजमन्दिरं ।
विप्राः स्वाध्यायसंसक्ता नाकुर्वन् शस्त्रधारणं ॥ ९ ॥
न विप्रगुरवः साम गायन्तो मदिरां पपुः ।
न तापसाः पुत्रदारपशुधान्यान्यढौकयन् ॥ १० ॥
न मूर्खा गुरवो मत्स्या पूपयागविधायिनः ।
चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणं ॥ ११ ॥
नादृश्यन्त च गेहिन्यो गुरुदीक्षोत्थदेवताः ।
कुर्वाणा भक्तिशीलश्रीनिषेधं मूर्धधूननैः ॥ १२ ॥
कार्तान्तिको भिषक् सभ्यो गुरुर्मन्त्री पुरोहितः ।
दूतः स्थेयो लेखको वा न तदाभूदपण्डितः ॥ १३ ॥
प्रायोपवेशाधिकृतैर्बोधितेन महीभृता ।
प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत् ॥ १४ ॥
अहमाढ्योऽभवं पूर्वं वास्तव्योऽत्र महीपते ।
निष्किञ्चनत्वं शनकैरागच्छन्दैवयोगतः ॥ १५ ॥
उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे ।
निश्चयोऽभूदृणं छित्वा परिभ्रान्तुं दिगन्तरे ॥ १६ ॥
अथ विक्रीय सर्वस्वमृणं शोधयता मया ।

मह्याधनाय वणिजे विक्रीतं निजमन्दिरं ॥ १७ ॥
भार्यामुद्दिश्य भर्तव्यामेकएव तु वर्जितः ।
सोपानकूपो विक्रीतान्मह्यतो वेश्मनस्ततः ॥ १८ ॥
निदाघे पुष्पताम्बूलीपर्णाद्यत्रातिशीतले ।
न्यस्यद्भिर्मालिकैर्दत्तात् सा जीवेद्बाटकादिति ॥ १९ ॥
ततोदिगन्तराद्गत्वा विंशत्या वत्सरैरहं ।
लब्धाल्पवित्तः संप्राप्तो जन्मभूमिमिमां पुनः ॥ २० ॥
अन्विष्यता मया साध्वी स्ववधूर्ददृशेऽथ सा ।
विवर्णदिह्या जीवन्ती प्रेष्यात्वेनान्यवेश्मसु ॥ २१ ॥
किं दत्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता ।
मयेति सा सुदुःखेन पृष्टा स्वोदन्तमब्रवीत् ॥ २२ ॥
सोपानकूपं संप्राप्ता त्वयि याते दिगन्तरं ।
लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ॥ २३ ॥
तदन्या कास्ति मे वृत्तिरित्युक्त्वा विरराम सा ।
तदाकर्ण्य निमग्नोऽहमन्तरे शोककोपयोः ॥ २४ ॥
कृतप्रायोपवेशोऽथ स्थैर्यैस्तैस्तैः पदे पदे ।
प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ॥ २५ ॥
जडत्वाद्देष्मि न न्यायं न विक्रीतो मया पुनः ।
सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणाः ॥ २६ ॥

सोऽहं विपद्गे क्षीणार्थो द्वारि शास्तुस्तव ध्रुवं ।
वृजिनादस्ति चेद्भीतिर्वस्तु निर्णायितां स्वयं ॥ २७ ॥
राजेति तेन विज्ञप्तो गत्वा धर्मासनं स्वयं ।
संघट्याखिलान् स्थेयानासीत् तत्त्वं विचारयन् ॥ २८ ॥
स्थेयास्तमूचुर्वङ्कुशो विचार्यायं पराजितः ।
शाठ्यादगणयन् न्याय्यं दण्ड्यो लिखितदूषकः ॥ २९ ॥
सोपानकूपसहितं विक्रीतंगृहमित्यथ ।
राज्ञा विक्रयपत्रस्थान् स्वयं वर्णानवाचयत् ॥ ३० ॥
ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि ।
अन्तरात्मा जगादेव नृपतेरर्थिनो जयं ॥ ३१ ॥
मुहूर्तमिव संचिन्त्य राजान्याभिरभूच्चिरं ।
कथाभिरतिचित्राभिर्मोहयन् सभ्यमण्डलं ॥ ३२ ॥
कथान्तराले सर्वेभ्यो गृह्णन् रत्नानि वीक्षितुं ।
हसन् प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकं ॥ ३३ ॥
क्षणादिवाखिलैः स्थेयमित्थमेवेति सस्मितं ।
वचो ब्रुवाणः प्रययौ पादक्षालनकैतवात् ॥ ३४ ॥
अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकं ।
भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकं ॥ ३५ ॥
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः ।

यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां ततः ॥ ३६ ॥
निर्णयेऽस्य तया कृत्यमस्ति भाण्डपतेरिति ।
श्रुत्वादाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ॥ ३७ ॥
दीनाराणां दशशती तस्यां भूभृद्वाचयत् ।
व्ययमध्येऽधिकरणालेखकाय समर्पितां ॥ ३८ ॥
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः ।
रेफे सकारं वणिजा कारितं निश्चिकाय सः ॥ ३९ ॥
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्वाभयं च तं ।
श्रानीय लेखकं सभ्यान् संजातप्रत्ययान् व्यधात् ॥ ४० ॥
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्थं वणिग्गृहं ।
वितीर्णमर्थिनो देशात् प्रत्यर्थी च प्रवासितः ॥ ४१ ॥
कृताह्निकं भोक्तुकामं तं दिनान्ते च भूपतिं ।
श्रकालावेदनाद्बिभ्यत् क्षत्ता जातु व्यजिज्ञपत् ॥ ४२ ॥
देवः समाप्तकृत्योऽस्य विज्ञप्तौ श्वस्तव क्षणः ।
इत्युक्तो दर्शने प्राणत्यागी विप्रो बहिःस्थितः ॥ ४३ ॥
दत्तप्रवेशादेशोऽथ रुद्धसूदेन भूभुजा ।
द्विजः प्रविष्टः पृष्टोऽथ तीव्रार्तिरिदमब्रवीत् ॥ ४४ ॥
सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेऽर्जितं ।
गृहीत्वा श्रुतसीरास्यः स्वदेशमहमागतः ॥ ४५ ॥

त्वयि राजनि निश्चौरैरध्वभिर्विशतः सुखं ।
कोऽभवल्लवणोत्से मे दिनान्ते ग्राम्यतः स्थितिः ॥ ४३ ॥
दीर्घाध्वलंघनक्लान्तस्तत्राहमकुतोभयः ।
मार्गारामतरोर्मूले त्रियामामस्यवाहयं ॥ ४७ ॥
वेतानं ग्रन्थिबद्धं तद्गुत्याश्लोरपतन्मम ।
अरघट्टे समीपस्थे कक्षयोगादलक्षिते ॥ ४८ ॥
तस्मिन् दुरवरोहेऽतिनिर्वसुत्वाङ्मकृद्वपुः ।
सोऽहं हारितसर्वस्वः शोचन् रुद्धश्चिरं जनैः ॥ ४९ ॥
एकोऽध्यवसितः कोऽपि साहसी पुरुषोऽब्रवीत् ।
मह्यं दापितवित्ताय किं ददासीति मां ततः ॥ ५० ॥
तमस्म्यवोचं विवशस्तस्यार्थस्यास्मि कः प्रभुः ।
तुभ्यं यद्रोचते मह्यं तत् ततो दीयतां त्वया ॥ ५१ ॥
अवरुह्याधिरूढोऽथ नूपकेभ्यो द्वयं मम ।
स प्रादात् स्पष्टमेवाष्टानवतिं स्वीचकार तु ॥ ५२ ॥
व्यवहारा वचोनिष्ठा एका राज्ञि यशस्करे ।
निन्दन् व्यवस्थां तां लोकैर्न्यकृकृतोऽस्मीति वादिभिः ॥ ५३ ॥
उपचारोक्तिसारल्यच्छलहारितवेतनः ।
सोऽहं जहास्यमून् द्वारे दुर्व्यवस्थापकस्य ते ॥ ५४ ॥
पुंसस्तस्य स राज्ञाथ पृष्टः प्रकृतिनामनी ।

वदन्प्रत्यभिज्ञैव ममास्तीत्यभ्यभाषत ॥ ५५ ॥
प्रातस्तवेप्सितावाप्तिं करिष्यामीति भूभुजा ।
प्रतिज्ञाय कथञ्चित् स स्वपार्श्वे कारितोऽशनं ॥ ५६ ॥
लवणोत्सोकसां हृत्वाहृतानां स विशां ततः ।
स्थितमन्तर्द्धिजोऽन्येद्युस्तं राज्ञेऽदर्शयन्नरं ॥ ५७ ॥
पृष्टः स राज्ञा विप्रेण यथैवोक्तं तथैव तत् ।
सर्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन् ॥ ५८ ॥
सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरं ।
अलक्षयन्तः प्रेक्षन्त दोलाकुलधियो धरां ॥ ५९ ॥
धर्मासनस्थो राजाथ सूपकाणामभाषत ।
तमष्टानवतेः पात्रं विप्रमन्यं द्वयस्य तु ॥ ६० ॥
अनुयोक्तुं जगादापि दुःसंचिन्त्या महात्मनः ।
धर्मस्याधर्ममुद्धृत्तं निहन्तुं धावतो गतिः ॥ ६१ ॥
सायं कृताशं प्रविशन्नम्भ्यं चेन्दुमण्डलं ।
स्वतेजसा संविभजन् प्रदीपैर्ज्योत्स्नयाप्यसौ ॥ ६२ ॥
तदुत्थाय यथा भानुर्निहन्ति ध्वान्तमुद्धृतं ।
अनन्यकर्मा धर्मोऽयं तथाधर्मं व्यपोहति ॥ ६३ ॥ युग्मं ॥
दुःसंलक्ष्यस्तु धर्मोऽसावधर्मं बाधतेऽञ्जसा ।
तिष्ठन्नित्यमधिष्ठाय दारुणं काष्ठमिवानलः ॥ ६४ ॥

दद्दाति यद्भवान् दत्तां तदित्याभ्युक्तमुज्ज्वलः ।
तुभ्यं रोचत इत्यादि वचोऽस्य निःसृतं तदा ॥ ६५ ॥
रुचितास्य बभूवाष्टानवतिर्लोभिनोऽस्य तां ।
नादादस्मायरुचितं नूपकाणां द्वयं ददत् ॥ ६६ ॥
इत्यादिसूक्ष्मेक्षिकया धर्माधर्मान्तरं विदन् ।
प्रत्यवेक्षापरः क्ष्माभृद्व्यधात् कृतयुगोदयं ॥ ६७ ॥
इत्थं चनं स विन्यस्यन् क्वास्योऽभून्निजतुर्नयैः ।
परस्यो पदिशन् पथ्यमपथ्याशीव रोगकृत् ॥ ६८ ॥
श्रोत्रियेणेव तेनापि मृदम्भः शौचशालिना ।
डोम्बोच्छिष्टभुजो भृत्याः पार्श्वान्न परिजिह्रिरे ॥ ६९ ॥
यथोत्तरं संश्रितार्थैरन्योन्यं पृष्ठपातिभिः ।
नगराधिकृतैश्चक्रे चतुर्भिः सोऽर्थसंग्रहं ॥ ७० ॥
लेभिरे निधनं तस्मात् सत्यङ्कारात् पदातयः ।
श्रीरणेश्वरपीठाग्रन्यस्तखड्गादपि प्रभोः ॥ ७१ ॥
स ज्येष्ठे भ्रातरि मृते तथाभूद्मुदितश्चिरं ।
तदुपघ्नैर्यथा प्राज्ञैस्तत्रोत्प्रेक्षि रसार्पणं ॥ ७२ ॥
नीतस्य मण्डलेशत्वं वेलावित्तस्य भूभुजा ।
देवीः कामयमानस्य चक्रे गजनिमीलिका ॥ ७३ ॥
रागाच्छुद्धान्तकान्तानां मूर्द्धानमधिरोपिता ।

लज्जानामाभवद्वेश्या तस्य वैवश्यकारिणी ॥ ७४ ॥
अवकाशः सुवृत्तानां हृदयान्तर्न योषितां ।
इतीव विहितौ धात्रा सुवृत्तौ तद्बहिः कुचौ ॥ ७५ ॥
उत्तमाधमसंसक्तो ज्ञानन् सदृशवृत्तिताम् ।
नारीणां शुचिवाक्यानामङ्गनावं व्यधाद्विधिः ॥ ७६ ॥
सा लालितापि राज्ञा यल्लज्जा ललितलोचना ।
चण्डालयामिकेमागाद्यामिनीषु समागमं ॥ ७७ ॥ युग्मं ॥
सुभगंकरणं किंचिच्चण्डालतरुणोऽभवत् ।
तं यत्प्रभावविवशा भेजे राजबधूरपि ॥ ७८ ॥
सा वा चण्डालकुलजा स वा कार्मणकर्मवित् ।
अन्यथा संगमः किं स्यादसंभाव्यस्तथाविधः ॥ ७९ ॥
सोऽभूत् केन प्रकारेण तया सह समागतः ।
इत्येष लेभे वृत्तान्तः प्रतिभेदं न कुत्रचित् ॥ ८० ॥
केवलं प्रत्यभात् तादृक् पापिनोः प्रेम तत् तयोः ।
दृग्व्यापारेक्षणात् क्षिप्रं ह्लादिनाम्नोऽधिकारिणः ॥ ८१ ॥
तमर्थमथ तथ्येन वीक्ष्य प्रणिधिभिर्नृपः ।
प्रायश्चित्तानुचरणात्क्षामः कृष्णाजिनं दधौ ॥ ८२ ॥
कुपितोऽपि स यन्नैनां न्यवधीद्रागमोहितः ।
तेनैवागात् पुरोभागिवितर्कातङ्कपात्रतां ॥ ८३ ॥

डोम्बोच्छिष्टानुगासङ्गादशुचित्वं यशस्करे ।
संक्रान्तं कुष्ठिसंस्पर्शात् कुष्ठं दुःखमिवाभवत् ॥ ८४ ॥
सामान्येन सता कैश्चित् सदृशैः शुभकर्मभिः ।
जन्मान्तरीयैः साम्राज्यं मया प्रापीति चिन्तयन् ॥ ८५ ॥
साम्राज्यकामोऽपि नृपो भाविष्वपि स जन्मसु ।
युक्त्या प्रादान्निरातङ्कां राजलक्ष्मीं द्विजन्मने ॥ ८६ ॥
भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः ।
छात्राणामार्यदेश्यानां तेन विद्यार्थिनां मठः ॥ ८७ ॥
मठाधिपतये तत्र छत्रचामरहासिनीं ।
स नरेन्द्रश्रियं प्रादात् स्वकान्तः पुरवर्जितां ॥ ८८ ॥
वितस्तापुलिने राजा नानोपकरणान्वितान् ।
ब्राह्मणेभ्यः सोऽग्रहारान् पञ्चपञ्चाशतं ददौ ॥ ८९ ॥
अथ जातोदरव्याधिर्मज्जतो नायमित्यसौ ।
जानन् संग्रामदेवाख्यं परिवर्ज्य निजात्मजं ॥ ९० ॥
समर्प्य सचिवैकाङ्गसामन्तानभ्यषेचयत् ।
रामदेवात्मजं राज्ये वर्णटं प्रपितृव्यजं ॥ ९१ ॥
शक्ये राज्यादपाकर्तुं शिशावनभिषेचिते ।
निराशः समपद्यन्त तदा राज्यजिहीर्षवः ॥ ९२ ॥
स पर्वगुप्तकौटिल्यप्रयुक्तोऽद्दयोन्मुखः ।

विपाककालस्तत्राह्नि भङ्गोन्मुख इवाभवत् ॥ ९३ ॥
राजधानीस्थितस्यापि वण्ठो राज्यदायिनः ।
आरोग्यवार्त्तयाप्यासीन्मुमूर्षोर् निरीक्षकः ॥ ९४ ॥
ततः सानुशयो राज्ञा ताम्यन् प्रैर्यत मन्त्रिभिः ।
राज्यं संग्रामदेवाय दातुमाश्वासकारिभिः ॥ ९५ ॥
राजाज्ञया निशामेकां बद्धोऽष्टस्तम्भमण्डपात् ।
वह्निर्दत्तार्गलात् प्रातर्वण्ठो निरवतार्यत ॥ ९६ ॥
भयात् प्रजागराद्वापि तद्भृत्यानां विवेकिनां ।
आस्थानमण्डपं प्राप पायुक्षालनभूमितां ॥ ९७ ॥
एकाह्नं राजपुरुषस्तदासिं विजयेश्वरे ।
क्रीडाद्देवप्रसादाख्यो राजवीजी समर्पयत् ॥ ९८ ॥
अथाभिषिच्य संग्रामदेवं तीव्रीभवद्व्यथः ।
स राजधान्या निर्गत्य मर्त्तुं निजमठं ययौ ॥ ९९ ॥
धीः केशश्मश्रुवपने शिरःशाटकवर्जने ।
काषायग्रहणोद्वेगः शस्त्रत्यागग्रहश्च यः ॥ १०० ॥
राजभृत्यैः प्रतिज्ञातः स तस्मिन् निश्चितक्षये ।
जीवत्येव कृतज्ञत्वव्यञ्जकैः परिवर्जितः ॥ १०१ ॥ युग्मं ॥
द्वे सहस्रे सुवर्णस्य सार्द्धे बद्ध्वा पटाञ्चले ।
यो निर्जगाम राजासौ मुमूर्षुर्निजमन्दिरात् ॥ १०२ ॥

पञ्चभिः पर्वगुप्ताद्यैर्यैतकं तस्य मन्त्रिभिः ।
कृतं सजीवितस्यैव विभज्यान्योन्यमग्रतः ॥ १०३ ॥ युग्मं ॥
विचेष्टमानः शय्यायां व्याधिदग्धान्तरो नृपः ।
तिष्ठन् मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते ॥ १०४ ॥
अज्ञातसम्विद्भ्रंशोऽग्रे पश्यन् द्रोहपरान् निजान् ।
प्राणैरहानि द्वित्राणि न यदा निरमुच्यत ॥ १०५ ॥
तदा सुहृद्बन्धुभृत्यवेलावित्तैः कृतवैरैः ।
जिहीर्षुभिश्च साम्राज्यं विषं दत्वा विपादितः ॥ १०६ ॥ तिलकं ॥
अवरोधबधूमध्यात् सती तं पतिमन्वगात् ।
एका त्रैलोक्यदेव्येव स्वप्रभेव विरोचनं ॥ १०७ ॥
वर्णाश्रमप्रत्यवेक्षा बद्धकक्ष्यः क्षितीश्वरः ।
चक्रभान्वभिधं चक्रमेलके द्विजतापसं ॥ १०८ ॥
कृतात्याचारमालोक्य राजा धर्मवशम्वदः ।
निजग्राह श्वपादेन ललाटतटमङ्कयन् ॥ १०९ ॥
तन्मातुलेन तद्दोषाद्वीरनाथेन योगिना ।
सान्धिविग्रहिकेणाथ स स्वेनेव न्यगृह्यत ॥ ११० ॥
पूर्वाचार्यप्रभावेण स्वमाहात्म्याधिरोपणां ।
प्रख्यापयद्भिर्गुरुभिः श्रद्धयेति यदुच्यते ॥ १११ ॥
तत् ख्यापितेव समाहात् स विपन्न इति श्रुतिः ।

दीर्घव्याधिहते तस्मिन्नुपपत्तिः कथं भवेत् ॥ ११२ ॥
अथामयान्तरे वाभूत् सा वार्तेत्युच्येत यदि ।
वर्णटाद्यभिशापोऽपि तदायात्वत्र हेतुतां ॥ ११३ ॥
भुक्तैश्वर्यो नवसमाश्चतुर्विंशे स हायने ।
मासि भाद्रपदे कृष्णातृतीयस्यां व्यपद्यत ॥ ११४ ॥
पितामहीं शिशोर्गोप्त्रीं विनिवेश्य नृपासने ।
भूभटाद्यैः समं प्राभूत् पर्वगुप्तोऽथ पञ्चभिः ॥ ११५ ॥
क्रमात् समं पितामह्या तान् व्यापाद्येतरान् बली ।
एकः स एवमाक्रान्तः प्रबभूव नृपास्पदे ॥ ११६ ॥
स पार्थिबत्वमल्पिलमिश्रया चेष्टया स्फुटं ।
राजा राजानकश्चेति मिश्रामेवं धियं व्यधात् ॥ ११७ ॥
सेवमानः स्वयं बालभूपं भोज्यार्पणादिभिः ।
अनूनां प्रत्यभात् पर्वगुप्तो द्रोहवहिष्कृतः ॥ ११८ ॥
यान् द्रोहभीरून् संभाव्य संविभेजे यशस्करः ।
तस्य तत् तनयोच्छेदे त एवासन् प्रयोजकाः ॥ २११ ॥
करभाङ्गरुहापिङ्गे श्मश्रुणि क्षितिपालवत् ।
स ददौ कुङ्कुमालेपं वर्चः शाद्वलविस्तृते ॥ १२० ॥
विश्यदेकाङ्गसंघातात् प्रकटोत्पाटनाक्षमः ।
प्रमापणाय प्रायुंक्त शिशोः कर्माभिचारिकं ॥ १२१ ॥

न्याय्यं ते सान्वयस्यास्ति राज्यं चैत्रादिवासरे ।
अन्यथा चरतो नाशः क्षिप्रं वंशायुषोर्भवेत् ॥ १२२ ॥
इतीमामपि यामिन्यां श्रुतवान् भूतभारतीं ।
अभिचारस्य बन्ध्यत्वं निर्ध्यायाधिकशङ्कितः ॥ १२३ ॥
एकाङ्गेभ्यो विभिन्नेभ्यो किंचिदुद्भिन्नसंभ्रमः ।
उदताम्यत् तथा चिन्तालुप्तसंविद्दिवानिशं ॥ १२४ ॥
यथा महाहिमापातनिःसंचारजने दिने ।
अकस्मात् संभृतबलो राजधानीं निरुद्धवान् ॥ १२५ ॥
विरोधकारिणं बुद्धाभिधेन सह सूनुना ।
निर्द्रोहमाहवे हत्वा मन्त्रिणं रामवर्धनं ॥ १२६ ॥
पित्र्येण बेलावित्तेन प्राभृतार्थमुपाहृतां ।
गले पुष्पस्रजं बद्ध्वा पातितः पार्थिवासनात् ॥ १२७ ॥
स तं वक्रांगसंग्रामं हृतमन्यत्र मन्दिरे ।
पातयित्वा वितस्तान्तःकण्ठबद्धशिलं निशि ॥ १२८ ॥
चतुर्विंशस्य वर्षस्य दशम्यां कृष्णफाल्गुणे ।
पापः सखड्गकवचो न्यविक्षत नृपासने ॥ १२९ ॥ चतुर्भिः कुलकं॥
पारेविशोके द्विविराज्जातस्याभिनवाभिधात् ।
सूनुः संग्रामगुप्तस्य स तथा पार्थिवोऽभवत् ॥ १३० ॥
केचित् तं प्रत्यवस्थानं ये पुरा प्रतिजज्ञिरे ।

ते सर्व एव तद्गीताः प्रातरेव प्रणेमिरे ॥ १३१ ॥
पार्थिवैकाङ्गसामन्तमन्त्रिकायस्थतन्त्रिणां ।
तद्गीत्या द्रोहवृत्तीनां द्रोहादितमदृश्यत ॥ १३२ ॥
एकाङ्गस्य तदा स्थाने सुप्याभिज्ञनजन्मनः ।
प्रमादान्मदनादित्यनाम्नो ठक्का व्यदीर्यत ॥ १३३ ॥
कृतांशुकेन भूभर्त्रा कुपितेन खलीकृतः ।
स निकृत्तकचश्मश्रुस्तपस्वी समपद्यत ॥ १३४ ॥
तादृशस्य पुनस्तस्य सस्त्रीपुत्रत्वमीयुषः ।
अद्याप्यभिजने ज्ञाता वसन्ति त्रिपुरेश्वरे ॥ १३५ ॥
कुर्वता पर्वगुप्तेन भूभृता द्रविणार्जनं ।
प्रापिताः पुनरुत्साहं प्रजा रोगानियोगिनः ॥ १३६ ॥
व्यधत्त स्कन्दभवनविहारवसुधान्तिके ।
पर्वगुप्तेश्वरं सोऽपि वृजिनार्जितया श्रिया ॥ १३७ ॥
श्रीयशस्करभूभर्तृशुद्धान्तस्य विशुद्धधीः ।
कौलीनमलुनादेका गौरीव नृपसुन्दरी ॥ १३८ ॥
सुचिराद्धरितप्रीतिः पर्वगुप्तस्य याकरोत् ।
समागमार्थिनो युक्त्या वञ्चनामुचितां सती ॥ १३९ ॥
इदं यशस्करस्वामिसुरवेश्माद्धनिर्मितं ।
त्यक्त्वा पत्युर्विपन्नस्य कृत्वा निर्वाणपूरणं ॥ १४० ॥

अमोघमस्मि नियमाद्विधास्यामि त्वदीप्सितं ।
सच्छुपच्छन्दयन्नेवं सुभ्रुवाभिहितस्तया ॥ १४१ ॥
अथ प्रवृद्धगर्वेण तत्स्वल्पैरेव वासरैः ।
संपूर्णतां सुरगृहं गमितं तेन भूभुजा ॥ १४४ ॥
सा यागज्वलने राजललना पीतसर्पिषि ।
पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुं ॥ १४३ ॥
उपर्यस्या निरस्तासोः प्रुष्टाः कुसुमवृष्टयः ।
तत्कांक्षिणास्तु न्यपतन्नवर्णमुखरागिरः ॥ १४४ ॥
सुदीर्घसाहसारम्भचिन्तासंरम्भशोषितः ।
पर्वगुप्तो बभूवाथ तृष्णामयपथातिथिः ॥ १४५ ॥
व्याध्याधिप्रशमायासैर्ज्ञात्वाप्यस्थायिनीं स्थितिं ।
मूढाः प्रवृत्तिं नोज्झन्ति द्रोहे श्रीलोभमोहिताः ॥ १४६ ॥
अशंक्य तादृङ्निष्ठोऽपि सोऽकुण्ठैः प्राक्तनैः शुभैः ।
केश्चित् सुरेश्वरीक्षेत्रे परासुः समपद्यत ॥ १४७ ॥
षड्विंशवत्सराषाढवहुलेऽह्नि त्रयोदशे ।
द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत ॥ १४८ ॥
अतीन्द्रियायां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी ।
दृश्येत नाशो यदि नाम नाशु न
कः कुकृत्येन यतेत भीत्यैः ॥ १४९ ॥

क्षेमगुप्ताभिधानोऽभूदथ राजा तदात्मजः ।
आसवासेवनोत्सिक्तवित्ततारुण्यसंज्वरः ॥ १५० ॥
सोऽभूत् स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात् ।
कृष्णाक्षपाक्षणो घोरमेघान्ध इव भीतिकृत् ॥ १५१ ॥
स्वतुल्यवेशालंकाराः शतं लाल्लिकका नृपं ।
तं फल्गुणप्रभृतयो दुराचाराः सिषेविरे ॥ १५२ ॥
द्यूतासवाङ्गनासेवाव्यसनेऽपि स पार्थिवः ।
विटनिर्लुण्ठ्यमानोऽपि नाभूल्लक्ष्मीबहिष्कृतः ॥ १५३ ॥
रागी मधुप्रणयवान् विहिताक्षसक्तिर्यः
सख्यमेति मधुपैर्हृतकोशसारैः ।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं
श्रीस्तत्र चेत् किमिव तन्न कुतूहलाय ॥ २५४ ॥
विटाः प्रविष्टा हृदयं जिष्णुजा वामनादयः ।
पिशाचस्येव रुचितामशुचिं तस्य चक्रिरे ॥ १५५ ॥
परोपहासकुशलः परनारीरतिप्रियः ।
परायत्ताशयस्तस्थौ पार्थिवोऽनर्थतत्परः ॥ १५६ ॥
ष्ठीवनं श्मश्रुमालासु गालयः श्रोत्रपालिषु ।
तेन क्षिप्ताः प्रतीहार्याणां करोटीषु च टक्कुराः ॥ १५७ ॥
कटिसंघट्टनान्नार्यो मृगव्यग्रा वनाटनैः ।

विटाश्चाश्लीलरटनैर्वाल्लभ्यं तस्य लेभिरे ॥ १५८ ॥
पुंश्चलीजाल्मवैधेयबालकद्रोगधृनिर्भरा ।
समभूदप्रवेशार्हा राजपर्षन्मनस्विनां ॥ १५९ ॥
जिष्णुपुत्त्रैः क्षेमगुप्तक्ष्मामाभृद्वप्पुत्त्रकः ।
चारणावगुणाकृष्टः किं न धूर्तैरनर्त्यत ॥ १६० ॥
तस्य कङ्कणवर्षोऽसीत्यभिधानं विधाय ते ।
तोषिताश्चासकृच्चक्रुर्दोष्णोः कङ्कणवर्षितां ॥ १६१ ॥
निर्दोषदोषाविष्कारे नववस्तुप्रदर्शने ।
अधृष्यठक्कुराधाने प्रसादः प्रापि तैर्नृपात् ॥ १६२ ॥
संलक्ष्य कुचकक्ष्यान्ताः कृत्वा निजवधूः पुरः ।
रागी राजा गृहान्नीतो द्यूते तैर्निर्धनः कृतः ॥ १६३ ॥
संभोगाभग्नसौभाग्यकृतस्पर्धैः परस्परं ।
संभुज्यता भवान् वक्तुविशेषमिति चोदितः ॥ १६४ ॥
उपभोगं स्वभार्याणां निर्लज्जैस्तैः स कारितः ।
का कृष्येति च रत्यन्ते पृष्टोऽभीष्टधनप्रदः ॥ १६५ ॥ युग्मं ॥
तस्य लालितकेष्वास्तां मूढो संभोगढौकने ।
मात्रोस्थारित्ररक्षित्वाद्भिक्षाकौ स्वरिधूर्जटी ॥ १६६ ॥
नीत्वा नर्मकथां गतां निजवपुर्मुञ्चन्ति मानोन्नतिं
सन्दूष्य स्वयमङ्गनाः शुचितया त्यक्तं कुलं कुर्वते ।

सौख्यं घ्नन्ति सुदीर्घमेव न समासन्नया यदर्थं श्रमः
प्रत्याख्याय तदेव वेत्ति न विटैः किं प्रार्थ्यते सेवया ॥ १६७ ॥
यशस्करस्य भूत्वापि सचिवो भट्टफल्गुणः ।
तस्याभूदनुजीव्यं ते धिग्भोगाभ्यासवासनां ॥ १६८ ॥
फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः ।
तस्योपदेशो भूभर्त्रा पर्यक्षास्यसकृद्रूक्षः ॥ १६९ ॥
गृह्णन् विद्वेषितां कर्तुं ठक्कुरादिबलात् ततः ।
वृद्धो रक्कः कम्पनेशो दुर्गोष्ठीमध्यगोऽभवत् ॥ १७० ॥
तीक्ष्णाक्षेपे संप्रविष्टं कर्तुं संग्रामडामरं ।
श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ॥ १७१ ॥
सुगतप्रतिमारीतिं कृत्वा दग्ध्वा ततोऽखिलात् ।
जरद्देवगृहेभ्यश्च संग्राह्य ग्रावसंचयं ॥ १७२ ॥
सुरप्रतिष्ठया दार्ढ्यं मूढः स्वयशसो विदन् ।
नगरापणावीथ्यन्तः क्षेमगौरीश्वरं व्यधात् ॥ १७३ ॥
एकः प्रयात्युपरमं द्रविणं तदीयं
कृत्वा परः प्रसभमुद्वहति प्रमोदं ।
नो वेत्ति तत्स्वनिधने परकोषगामि
धिग्वासनामसममोहकृतान्धकारां ॥ १७४ ॥
त्यागिना क्षेमगुप्तेन भुक्तार्थं खशभूभुजे ।

कृत्वा विहारान् निर्दग्धान् ग्रामाः षट्त्रिंशदर्पिताः ॥ १७५ ॥
दुर्गाणां लोहरादीनां शास्ता शतमखोपमः ।
नृपतिः सिंहराजाख्यस्तस्मै स्वां तनयां ददौ ॥ १७६ ॥
स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः ।
दिद्दाक्षेम इति ख्यातिं ययौ लज्जावहां नृपः ॥ १७७ ॥
मातामहेन भूभर्तुर्बध्वास्तस्या व्यधीयत ।
श्रीभूमिस्वामिनो दत्तप्रसादो भीमकेशवः ॥ १७८ ॥
चन्द्रलेखाभिधां कन्यां राज्ञे दत्तवताभवत् ।
फल्गुणाद्वारपतिना समं दिद्दा समत्सरा ॥ १७९ ॥
गुर्वुपदेशः सुमहान् कृतविद्याश्रमस्तथा ।
तस्यनिर्वहणादुर्व्यां दूभुजो हास्यतां ययौ ॥ १८० ॥
अमोघपतनान् प्रासान् योग्यान् संग्रामकर्मसु ।
शृगालमृगयासक्त्या स हि श्लाघ्यानमन्यत ॥ १८१ ॥
तं वृतं वागुरावाहिडोम्बाटविकपेटकैः ।
पर्यटन्तं श्वभिः सार्द्धमपश्यन् सततं जनाः ॥ १८२ ॥
तस्य दामोदरारण्यलल्यानशिमिकादिषु ।
स्थानेषु क्रोष्टुमृगयारसिकस्य वयोऽगमत् ॥ १८३ ॥
अथ कृष्णाचतुर्दश्यां स कुर्वन् मृगयां नृपः ।
ज्वालामपश्यत् क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ॥ १८४ ॥

तदालोकनसंजातसन्त्रासाकम्पितस्ततः ।
लूतामयज्वरेणाभूत् परीतो मृत्युहेतुना ॥ १८५ ॥
मर्तुं ययौ च वाराहक्षेत्रं यत्र विधायकः ।
श्रीकण्ठक्षेममठयोरासीद्धुष्कपुरान्तिके ॥ १८६ ॥
मसूरविदलाकारलूताक्लिन्नकलेवरः ।
पौषे चाब्दे चतुस्त्रिंशे नवमेऽब्दे सिते मृतः ॥ १८७ ॥
क्षेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत् ततः ।
शिशुर्निस्त्रिंशधर्मिण्या दिद्दादेव्यानुपालितः ॥ १८८ ॥
सन्धिविग्रहशुद्धान्तमुख्यकर्माधिकारिणः ।
निःसाध्वसं राजबधूमबन्ध्यशयनां व्यधुः ॥ १८९ ॥
अभिमन्यौ क्षितिं रक्षत्यकस्मादेव दारुणः ।
तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः ॥ १९० ॥
वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः ।
वेतालसूत्रपातस्थान् स ददाह महागृहान् ॥ १९१ ॥
डोम्बचण्डालसंस्पृष्टभूप्रसंपर्कदूषितान् ।
दग्ध्वा महागृहान् वह्निर्भुवः शुद्धिमिवाकरोत् ॥ १९२ ॥
रक्षित्री क्ष्मापतेर्माता स्त्रीस्वभावाद्विमूढधीः ।
सारासारविचारेण लोलकर्णी न पस्पृशे ॥ १९३ ॥
राज्ञः सुतार्पणाद्बद्धवैरा तस्थौ पुरा यतः ।

पतिवत्नीव सा सार्द्धं फल्गुणेनाग्र्यमन्त्रिणा ॥ १९४ ॥
पत्यौ मृते सपत्नीनां दृष्ट्वानुसरणं ततः ।
दम्भेनानुमुमूर्षन्तीमनुमेने स तां द्रुतं ॥ १९५ ॥
निषिषेधानुबन्धात् तु सानुतापां चितान्तिके ।
कृपालुर्मरणादेताममात्यो नरवाहनः ॥ १९६ ॥
अतो निसर्गपिशुनो रघ्नास्तां मन्युदूषितां ।
फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत् ॥ १९७ ॥
विरागशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयां ।
समन्युं साखिलामात्यां फल्गुणोऽप्यास्त शङ्कितः ॥ १९८ ॥
स हि सर्वाधिकारस्थः सर्वस्याक्तिगतोऽभवत् ।
दीप्यमानोऽधिकं मन्त्रशौर्योत्साहादिभिर्गुणैः ॥ १९९ ॥
अस्थीनि क्षेमगुप्तस्य गृहीत्वा जाह्नवीं गते ।
पुत्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः ॥ २०० ॥
तत्प्रत्यागमपर्यन्तं पर्णोत्से स्थातुमुद्यतः ।
अविश्वसन् नृपगृहे फल्गुणो वैरिशङ्कितः ॥ २०१ ॥
निर्गत्य नगराद्यावत् सभाण्डागारसैनिकः ।
काष्ठवाटान्तिकं प्राप्य तावद्रक्षादिचोदितः ॥ २०२ ॥
आकलय्य द्रुतं दिद्दा सन्त्यज्य प्रार्थनादिकं ।
पृष्टे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत् ॥ २०३ ॥

नवावमानखिन्नः स मिलितानन्तसैनिकः ।
प्रत्यावृत्त्य ततो मानी वाराहं क्षेत्रमाययौ ॥ २०४ ॥
श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनं ।
आस्कन्दशङ्किनी दिद्दा सामात्या समकम्पत ॥ २०५ ॥
तस्मिन् क्षेत्रे गतं शान्तं विलप्य स्वामिनं चिरं ।
वराहपादसविधे तेन शस्त्रं समर्पितं ॥ २०६ ॥
द्रोहसंभावनापापं शस्त्रत्यागेन मन्त्रिणा ।
स्वस्य संमार्जितं तेन राजमातुश्च साध्वसं ॥ २०७ ॥
युक्तायुक्तविचारवाङ्मनसः सेवा महद्वैशसं
क्रुद्धेऽस्मिन् प्रतिकारकर्म गहनद्रोहापवादावहं ।
येन न्यूनगुणोदृशेऽपकरणीभावोऽपि तस्मै परं कोपः
कोऽपि विवेकिनः समुचितः शास्त्राय शस्त्राय वा ॥ २०८ ॥
पर्णोत्समेव शनकैः ससैन्ये फल्गुणे गते ।
विगताध्यापका बाला इवामोदन्त मन्त्रिणः ॥ २०९ ॥
योगक्षेमौ चिन्तयन्ती क्षेमगुप्तवधूरपि ।
अनिशं प्रजजागार स्वयं कण्टकपाटने ॥ २१० ॥
राज्यप्रार्थी पर्वगुप्तो मन्त्रिणौ कोशपीथिनौ ।
अजियदतु करौ पूर्वं पुत्र्योर्यौ होजभूभटौ ॥ २११ ॥
तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ ।

अवर्द्धिषातां यो राजमन्दिरे राजपुत्रवत् ॥ २१२ ॥
तौ तत्रावस्थितावेव तत्कालं राज्यलालसौ ।
संमन्त्र्य समगंसातामुद्दामैर्ह्मिकादिभिः ॥ २१३ ॥
८ बलिनौ तावबलया राज्ञ्यापास्तौ नृपास्पदात् ।
समन्यू स्वगृहादास्तां यावत् कृतगतागतौ ॥ २१४ ॥
एकतः पृष्ठतः प्रादान् मह्मिनो निर्गतस्य सा ।
निर्वासनाय याष्टीकांस्तावत् प्रकटवैकृता ॥ २१५ ॥ कुम्भं ॥
शक्तिसेनाभिधानस्य श्वशुरस्य निवेशनं ।
प्रविवेश स तज्ज्ञात्वा तं ते तत्रापि दुद्रुवुः ॥ २१६ ॥
शक्तिसेनेन याष्टीकाः सान्त्विता नाचलन् यदा ।
तदा भीतस्य जामातुर्व्यक्तं प्रादात् स संश्रयं ॥ २१७ ॥
तं लब्धसंश्रयं प्राप ह्मिम्मको मुत्कलस्तथा ।
एरमत्तकनामा च परिह्रासपुराश्रयः ॥ २१८ ॥
श्रीमानुदयगुप्ताख्योऽप्यमृताकरनन्दनः ।
ललितादित्यपुरजा यशोधरमुखा अपि ॥ २१९ ॥
एकैकं तं मिथः सैन्यैर्भुवनक्षोभकारिणः ।
संभूय चक्रुर्द्दराख्यं मह्मिनः पक्षमाश्रितः ॥ २२० ॥
तस्मिन् महाभये दिद्दापक्षं मन्त्री सबान्धवः ।
एक एव तु तत्याज नाद्रोहो नरवाहनः ॥ २२१ ॥

प्रवर्द्धमानपृतना योद्धुं बद्धोद्यमास्ततः ।
पद्मस्वाम्यन्तिकं प्रापुर्दीप्यमानायुधा द्विषः ॥ २२२ ॥
अथ शूरमठे दिद्दा विसृज्यात्मजमाकुला ।
आपच्छान्तिद्यमांस्तांस्तानुपायान् समचिन्तयत् ॥ २२३ ॥
ललितादित्यपुरजान् द्विजान् स्वर्णेन भूरिणा ।
तूर्णं स्वीकृत्य विदधे रिपूणां संघभेदनं ॥ २२४ ॥
एकाङ्गेष्वखिलैः कोपो विधेय इति वादिभिः ।
महिम्नः पीतकोशैस्तैः सन्धिर्देव्या समं कृतः ॥ २२५ ॥
गोष्पदोल्लंघने यस्याः शक्तिर्नाज्ञायि केनचित् ।
वायुपुत्रायितं पंग्व्या तया संघाब्धिलंघने ॥ २२६ ॥
यत्संग्रहो रत्नमहौषधीनां करोति सर्वव्यसनावसानं ।
त्यागेन तद्यस्य भवेन्नमोऽस्तु
चित्रप्रभावाय धनाय तस्मै ॥ २२७ ॥
उत्कोचकाञ्चनादानेऽप्युग्रां ध्यायन्त्युपक्रियां ।
दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत् ॥ २२८ ॥
अभिचारं महिम्नश्च कृतवत्या मितैर्दिनैः ।
माण्डलेऽखण्डिताज्ञत्वं दिद्दायाः समजृम्भत ॥ २२९ ॥
कदाचित् ठक्कनाख्यस्य शाहेशस्योपरि क्रुधा ।
सह स्ववंशजैर्यात्रां कम्पनाधिपतिर्ददौ ॥ २३० ॥

तद्देशं निम्नगाशैलदुर्गं प्रविशता जवात्।
अखण्डशक्तिना तेन बलादग्राहि ठक्कुनः ॥ २३१ ॥
स कृतप्रणतेस्तस्य करमादाय भूपतेः।
अभिषेकाम्बुभिश्चक्रे शीलताप्यायनं पुनः ॥ २३२ ॥
लब्धप्रवेशैः समये तस्मिन् रक्कादिभिः खलैः।
कम्पनाधिपतौ राज्ञ्या विद्वेषोऽग्राहि मूढया ॥ २३३ ॥
उर्वीपतेश्च स्फटिकाश्मनश्च
शीलोज्झितस्त्रीहृदयस्य चान्तः।
असन्निधानात् सततस्थितीनामन्योन्यरागः
कुरुते प्रवेशं ॥ २३४ ॥
स्वचित्तसंवादिवचो वदन्तो धूर्ता
वितन्वन्ति मनः प्रवेशं।
पृथग्जनानां गणिकावधूनां विटाः
प्रभूणामपि गर्भचेटाः ॥ २३५ ॥
ऊग्धायं ठक्कुनं रत्नं धनादायीति पैशुनं।
तथ्यमेव तदीयं सा स्वयं वादादमन्यत ॥ २३६ ॥
अथ स्ववसतिं प्राप्ते कम्पनेशे जयोर्जिते।
याष्टीकान् व्यसृजद्दिद्दा स्फुटं निर्वासनोद्यता ॥ २३७ ॥
तदाक्षेपं समाकर्ण्य स्मरन्तः कोशसंविदं।

ते क्रिम्मकेरमत्ताद्याः पूर्ववद्विक्रियां ययुः ॥ २३८ ॥
नरवाहनमुख्यास्तु राज्ञीपक्षं न तत्यजुः ।
विभेदं पूर्ववत् प्रापदेवं निजबलं पुनः ॥ २३९ ॥
प्रविष्टेषु ततः कोपात् पुरं शुभधरादिषु ।
भट्टारकामठे दिद्दा भूयः पुत्त्रं व्यसर्जयत् ॥ २४० ॥
दत्तार्गलि नृपगृहे स्थितां तां देवमोहिताः ।
ते तदेव विना पुत्त्रं विमूढा नोदपाटयन् ॥ २४१ ॥
राज्ञ्याः संग्रघटे लोकः परस्मिन्नेव वासरे ।
यद्बलेन तदा स्थैर्यं सा किञ्चित् समदर्शयत् ॥ २४२ ॥
जयाभट्टारिकापार्श्वाद्याव‍च्छूरमठान्तिकं ।
व्याप्य स्थितैर्द्विषत्सैन्यैरथ प्रववृते रणः ॥ २४३ ॥
राजधानीं राजसैन्ये प्रविष्टे त्रासविद्रुते ।
सिंहद्वारे घटाबन्धमेकाङ्गाः समदर्शयन् ॥ २४४ ॥
शरीरनिरपेक्षास्ते भीतं संस्तभ्य तद्बलं ।
अधावन् विद्विषां सैन्यं चेलुः केचिच्च शत्रवः ॥ २४५ ॥
तस्मिन्नवसरे राजकुलभट्टः समाययौ ।
तूर्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजं ॥ २४६ ॥
तस्मिन् प्राप्ते द्विषां सैन्यं विननाश विनश्वरं ।
न ह्योढाविनयं जातु सहन्ते शस्त्रदेवताः ॥ २४७ ॥

तोटयत्यायसान् बन्धान् स्फोटयत्युपलानिति ।
यः ख्यातिमावहत् तथ्यां क्षिम्मको भीमविक्रमः ॥२४८॥
तस्यासिना राजकुलभट्टदेहार्द्धपातिना ।
चर्ममात्रं न तुत्रोट कंकटस्यातिसंकटे ॥ २४९ ॥
विलोक्य तदसंभाव्यं सैन्ये दैन्यं समाश्रिते ।
अघानि क्षिम्मको योधैरवाष्टम्भि यशोधरः ॥ २५० ॥
तथाप्यासीत् स्फुरन् संख्ये य ऐरमत्तकः क्षणं ।
स भग्नासिश्च्युतो वाहाज्जीवग्राहमगृह्यत ॥ २५१ ॥
नाम्ना तैरेष्यता धातुं यः श्रीमान् राजबान्धवः ।
जगामो दयगुप्तः स क्वापि त्यक्त्वा महाहवं ॥ २५२ ॥
इत्थं लब्धजया राज्ञी तत् क्षणान्ययहीद्रुषा ।
यशोधरं शुभधरं मुकुलं च सबान्धवं ॥ २५३ ॥
काश्मीरिकाणां यः श्राद्धशुल्कोच्छित्ता गयान्तरे ।
सोऽप्यैरमत्तकः शूरः परिहासपुराश्रयः ॥ २५४ ॥
बद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः ।
स्वदुर्नयफलं देव्याः प्रकोपेनानुभावितः ॥ २५५ ॥
ये सप्तसप्तताद्वर्षाद्गोपालनृपात् पुरा ।
अभिमन्युं यावदासन् षोडशानां महीभुजां ॥ २५६ ॥
वर्षषष्टिं प्रतापायुः श्रीहरा द्रोहवृत्तयः ।

ते क्षिप्रं मन्त्रिणः सर्वे सान्ववायाः सहानुगाः ॥ २५७ ॥
भीमभ्रूभङ्गमात्रेण दिद्दादेव्या सकोपया ।
आसन् निःशेषतां नीता दुर्गयेव महासुराः ॥ २५८ ॥ तिलकं ॥
अभवन् विहिता राज्ञ्या तानुत्पाट्य मदोद्धतान् ।
रक्कादयः कम्पनादिकर्मस्थानाधिकारिणः ॥ २५९ ॥
इत्थं मन्त्रिप्रकाण्डः स राण्डमाखण्डलोपमां ।
अखण्डमण्डलां चक्रे निर्द्रोहो नरवाहनः ॥ २६० ॥
राज्ञी कृतघ्नभावेन सापि मन्त्रिसभान्तरे ।
तमाजुहाव निर्द्रोहं स्वयं राजानकाख्यया ॥ २६१ ॥
सुप्ते सुस्वाप निष्पन्नभोजनेऽस्मिन्नभुक्त सा ।
हृष्टे जहर्ष निर्विण्णे निर्विवेदानुकूल्यतः ॥ २६२ ॥
आरोग्यान्वेषणं शिक्षाप्रार्थनां गृहवर्त्तिनः ।
सात्मवस्तुविसर्गं च नाकृत्वा तस्य पिप्रिये ॥ २६३ ॥
अभूतां पुण्यवाहस्य कुप्यनाम्नः सुतौ पुरा ।
यो सिन्धुभुय्यौ तज्ज्यायान् सिंधुर्लालितकः किल ॥ २६४ ॥
पर्वगुप्तगृहे भूत्वा गञ्जाध्यक्षे स्थिते क्रमात् ।
लब्धा गञ्जाधिकारित्वं तस्या राज्ञ्याः शनैरभूत् ॥ २६५ ॥
तुष्ट्या तयैव गञ्जेशो नवायामविधायकः ।
कर्मस्थानस्य निर्माता सिन्धुगञ्जाभिधस्य यः ॥ २६६ ॥

प्रायशो कृतराज्यस्ते वर्तते नरवाहनः ।
इति नेयधियं राज्ञीं सोऽभ्यधत्त डुराशयः ॥ २६७ ॥
सा तथेत्यब्रवीद्यावत् तावत् प्रेम्णा स ज्ञातुचित् ।
मन्त्री तां प्रार्थयामास भोक्तुं निजगृहागमं ॥ २६८ ॥
स सानुगां तत्र यातां ध्रुवं त्वामेव बत्स्यति ।
इत्युक्ता सिन्धुनापृच्छत् तत्कर्त्तव्यं भयाकुला ॥ २६९ ॥
अनुक्तेव प्रचलिता राजधानीमलक्षिता ।
स्त्रीधर्मिण्यस्मि जातेति पश्चाद्वार्त्तां व्यसर्जयत् ॥ २७० ॥
संप्रवृत्तोपचारायां गतायां तत्पथात् तथा ।
राज्ञ्यां नाशममात्यस्य प्रीति संविद्य सा ययौ ॥ २७१ ॥
तयोस्ततः प्रभृत्येव निष्कृष्टस्नेहयोः कृतं ।
चाक्रिकैरतिरूक्षत्वं तिलपिण्याकयोरिव ॥ २७२ ॥
कुलिशं सर्वलोहानामम्भसां शैलसेतवः ।
अभेद्याः प्रतिभाव्यन्ते न किञ्चिदसतां पुनः ॥ २७३ ॥
ये बालादपि संमूढाः प्राज्ञाः सुरगुरोरपि ।
तेषां न विद्मः किं तावन्निर्माणपरमाणवः ॥ २७४ ॥
विश्वासोज्झितधीः शिशून् कलयते काकोऽन्यदीयन् निजान्
हंसः क्षीरपयोविभागकुशलस्त्रस्यत्यसाराद्वनात्
लोकावेक्षणतीक्ष्णधीः खलगिरं जानाति सत्यां नृपो

धिग्वैदग्ध्यविमुग्धताव्यतिकरस्पृष्टं विधानं विधेः ॥ २७५ ॥
मूढाचरणहीना सा श्रुतिवाह्यतया तया ।
वैधेयविप्रप्रकृतिरिव प्रायाद्विगर्ह्यतां ॥ २७६ ॥
उद्वेजितस्तया शश्वत् तथा स नरवाहनः ।
यथा विमाननोत्तप्तः स्वयं तत्याज जीवितं ॥ २७७ ॥
प्रकुप्यत्यप्रतीकार्ये स्वतेजस्तप्तचेतसां ।
शरणं मरणं त्यक्त्वा किमिवान्यद्यशोऽर्थिनां ॥ २७८ ॥
शशिहीनेव रजनी सत्यत्यक्तेव भारती ।
विरराज न राजश्रीर्नरवाहनवर्जिता ॥ २७९ ॥
सा क्रौर्याभ्यासविषमा हन्तुं विततविक्रमान् ।
संग्रामडामरसुतान् समीपस्थानचिन्तयत् ॥ २८० ॥
निजमुत्तरघोषं ते तद्भयेन विनिर्गताः ।
कय्यकद्वारपत्यादीन् कृतारब्धीन् व्यपादयन् ॥ २८१ ॥
उत्पिञ्जभीतया राज्ञ्या त्यक्त्वा परिभवत्रपां ।
ते यत्नात् समघट्यन्त मानः स्वार्थार्थिनां कुतः ॥ २८२ ॥
स्थानेश्वरादिभिर्मुख्यैर्डामरैरितरैः समं ।
ते भीताः पुरतस्तस्याः पुनरेत्य जजृम्भिरे ॥ २८३ ॥
अथ तद्भीतया राज्ञ्या रक्के प्रमयमागते ।
आनीतः फल्गुणो भूयो वीरार्थिन्या निजान्तिकं ॥ २८४ ॥

राजकार्याणि कुर्वाणः स भूयः शस्त्रमग्रहीत् ।
न्यस्तशस्त्रोऽपि यत्सत्यं दुस्त्यजा भोगवासना ॥ २८५ ॥
महिमा राजपुर्यादिजयिनस्तस्य पश्चिमः ।
अद्भुतो वृद्धबन्ध्यक्या अवरुद्ध इवाभवत् ॥ २८६ ॥
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः ।
यः सहायोऽक्षपटले जयगुप्ताभिधः कुधीः ॥ २८७ ॥
अन्येऽधिकारिणास्तेन सहिताः क्रूरवृत्तयः ।
कश्मीरेषु व्यधुर्लुण्ठिं दुष्कृतैस्तदुपार्जितैः ॥ २८८ ॥
दौःशील्यभाजो मातुश्च पाप्मभिर्विधुरीकृतः ।
अभिमन्युः क्षणे तस्मिन् क्षयरोगेण पस्पृशे ॥ २८९ ॥
पण्डितः पुण्डरीकाक्षो विद्वत्पुत्रैरुपस्कृतः ।
कृतश्रुतः स वैदुष्यतारुण्याभ्यां विद्युते ॥ २९० ॥
तथा विशुद्धप्रकृतेस्तस्य दुष्कृतसंगमः ।
शोषाधायी शिरीषस्य रविताप इवाभवत् ॥ २९१ ॥
वर्धमानः प्रजाचन्द्रस्तृतीयस्यां स कार्तिके ।
शुक्लेऽष्टाचत्वारिंशाब्दे ग्रस्तो नियतिराहुणा ॥ २९२ ॥
तत्पुत्रो नन्दिगुप्तस्तु बालश्चक्रे निजासने ।
वृद्धस्तनयशोकस्तु दिद्दाया हृदये पदं ॥ २९३ ॥
सा शोकपिहितक्रौर्या तस्थौ प्रशमशीतला ।

रविरत्नशलाकेव ध्वान्तच्छन्नोऽम्नवीकृता ॥ २९४ ॥
ततः प्रभृत्यद्भुताभिस्तस्या धर्मप्रवृत्तिभिः ।
कुकर्मभिरूपोढापि लक्ष्मीः प्राप्ता पवित्रतां ॥ २९५ ॥
नगराधिपतिर्भूय्यः सिन्धुभ्राता शुभाशयः ।
तदीयधर्मचर्चायां बभूव परिपोषकः ॥ २९६ ॥
सा तेनोत्पादितानर्घजनरागा गतैनसा ।
ततः प्रभृत्यभूद्देवी सर्वलोकस्य सम्मता ॥ २९७ ॥
राज्ञः ससचिवः सत्यं दुःप्रापो लुप्तचण्डिमा ।
कुर्याद्यः सुखसेव्यत्वं हेमन्त इव भास्वतः ॥ २९८ ॥
सा निर्मात्री विपन्नस्य सूनोः सुकृतवृद्धये ।
अभिमन्युस्वामिनोऽभूदभिमन्युपुरस्य च ॥ २९९ ॥
अथ दिद्दापुरोपेतो दिद्दास्वामी तया कृतः ।
मठश्च मध्यदेशीयलाटशौडोऽत्र संश्रयः ॥ ३०० ॥
भर्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये ।
चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी ॥ ३०१ ॥
श्वेतशैलमयं चान्यं सा दिद्दा स्वामिनं व्यधात् ।
धवलं चरणोद्भूतगङ्गाम्भःप्लवनैरिव ॥ ३०२ ॥
चक्रे काश्मीरिकाणां च दैशिकानां समाश्रयः ।
तयात्युच्चचतुःशालो विहारश्चारुसंपदा ॥ ३०३ ॥

श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः ।
मठं च विदधे स्थित्यै देशिकानां द्विजन्मनां ॥ ३०४ ॥
मठप्रतिष्ठावैकुण्ठनिर्माणाद्यैः स्वकर्मभिः ।
तयातिपवनश्चक्रे वितस्तासिन्धुसंगमः ॥ ३०५ ॥
तेषु तेषु प्रदेशेषु किमुक्तैर्भूरिभिः शुभैः ।
सा प्रतिष्ठां व्यरचयच्चतुःषष्टिमिति श्रुतिः ॥ ३०६ ॥
जीर्णोद्धाराः कृता देव्या प्लुष्टप्राकारमण्डलाः ।
प्रायः सुरगृहाः सर्वे शिलावप्रावृताः कृताः ॥ ३०७ ॥
क्रीडाचंक्रमणो राज्ञ्याः पंग्व्याविग्रहवाहिनी ।
वल्गाभिधा वैवधिकी वल्गामठमकारयत् ॥ ३०८ ॥
तीर्थासेवनमौनभागपि तिमिः सक्तः स्वकुल्याशने
वाताशान् ग्रसते शिखी घनपयोमात्राशनोऽप्यन्वहं ।
विश्वस्तान् जलचारिणः प्रकटितध्यानोऽपि भुंक्ते वकः
सत्कर्माचरणेऽपि दोषविकृतौ न प्रत्ययः पापिनां ॥ ३०९ ॥
वर्षिणी वर्षमात्रेण शान्तशोका बभूव सा ।
भोगोत्सुकार्भके तस्मिन् नगरि व्यभिचारकृत् ॥ ३१० ॥
वर्षे एकान्नपञ्चाशे नीतः पक्षे सिते क्षयं ।
स मार्गशीर्षद्वादश्याममार्गव्यग्रया तया ॥ ३११ ॥
पौत्रस्त्रिभुवनो नाम मार्गशीर्षे सितेऽहनि ।

पञ्चमेऽप्येकपञ्चाशे वर्षे तद्वत् तया कृतः ॥ ३१२ ॥
अथ मृत्युपथे राज्यनाम्नि स्वैरं निवेशितः ।
क्रूरया चरमः पौत्त्रो भीमगुप्ताभिधस्तथा ॥ ३१३ ॥
तस्मिन्नवसरे वृद्धः फल्गुणोऽपि व्यपद्यत ।
निगूढक्रौर्यदोःशील्या दिद्दा यद्गौरवादभूत् ॥ ३१४ ॥
बभूव साथ सुस्पष्टदुष्टचेष्टाशतोत्कटा ।
भ्रष्टवक्त्रपटा मत्तदन्तिमूर्तिरिवोत्कटा ॥ ३१५ ॥
महाभिजनजातानामपि का धिङ्निसर्गतिः ।
सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी ॥ ३१६ ॥
स्रोतोऽधिराज्यमधिगम्य विराजमानात्
सिन्धोः प्रसूय कमलाल्पपयोनिकेते ।
जाते सरस्यविरतं जलजे प्रसक्ता नार्यो
महाभिजनजा अपि नीचभोग्याः ॥ ३१७ ॥
खशस्य वट्टिवासाख्यपर्णोत्सग्रामजन्मनः ।
वाणस्य सूनुस्तुङ्गाख्योऽविशन्महिषपालकः ॥ ३१८ ॥
प्रविष्टो जातु काश्मीराँल्लेखहारककर्मणा ।
सुगन्धिसीहप्रकटनागाद्यिकषन्मुखैः ॥ ३१९ ॥
पञ्चभिर्भ्रातृभिः सार्द्धं सन्धिविग्रहकान्तिके ।
देव्यादृग्गोचरं यातो हृदयावर्जकोऽभवत् ॥ ३२० ॥ तिलकं ॥

रक्तः प्रवेशितो दूत्या स भाव्यर्थबलाद्भुवा ।
संभुक्तभूरिजाराया अपि तस्याः प्रियोऽभवत् ॥ ३२१ ॥
तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः ।
रसदानेन वैमुख्यभाजं भुय्यमघातयत् ॥ ३२२ ॥
धिग्निर्विचारान् कुपतीन् येषां विषमचेतसां ।
फलशून्या स्तुतिस्तोषे दोषे प्राणधनक्षयः ॥ ३२३ ॥
रक्तो देवकलशो वेलावित्तः कृतस्तया ।
भुय्याधिकारे कौठिन्यमाचरन् निस्त्रपो विटः ॥ ३२४ ॥
येऽपि कर्दमराजाद्या वीराद्वारादिनायकाः ।
तेऽपि कौठिन्यमभजन्नन्येषां गणनैव का ॥ ३२५ ॥
चतुः प्रस्थानि वर्षाणि तिष्ठन् नृपगृहे शिशुः ।
भीमगुप्तोऽभवद्यावत् किञ्चित् प्रौढीभवन्मतिः ॥ ३२६ ॥
राज्यव्यवस्था यावच्च पितामह्याश्च वृत्तयः ।
दुस्थिताः प्रत्यभापन्त संस्थाप्यास्तस्य चेतसि ॥ ३२७ ॥
अङ्गशीलविहीनाया निर्घृणाया निसर्गतः ।
तावन्नेयधियस्तस्याः सचिन्त्यः समपद्यत ॥ ३२८ ॥
अभिमन्युबधूस्तं हि चक्रे गूढप्रवेशितं ।
महाभिजनजं पुत्त्रं तस्मात् सोऽभूत् तथाविधः ॥ ३२९ ॥
सा देवकलशेनाथ दत्तमन्त्रा विशङ्किता ।

अपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत् ॥ ३३० ॥
निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योऽभवत् ।
सन्देहः स तया तेन व्यक्तकृत्येन वारितः ॥ ३३१ ॥
ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा ।
षट्पञ्चाशे ऽभवद्वर्षे स्वयं क्ष्मातलनृपासना ॥ ३३२ ॥
प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने ।
सर्वाधिकारी तुङ्गोऽथ बभूवाधरिताखिलः ॥ ३३३ ॥
सभ्रातृकेन तुङ्गेन मीलिताः पूर्वमन्त्रिणः ।
राज्यविप्लवमाधातुमयतन्त विरागिणः ॥ ३३४ ॥
तेऽथ संमन्त्र्य कश्मीरानानिन्युः क्रूरपौरुषं ।
उग्रं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपं ॥ ३३५ ॥
मुख्याग्रहारान् स प्राप्तो विधातुं राज्यविप्लवं ।
धीमान् प्रायोपवेशाय द्रुतं प्रावेशयद्द्विजान् ॥ ३३६ ॥
विहितैकोद्येषु विप्रेषु लोकः सर्वोऽपि विप्लुतः ।
अन्विष्येषान्वहं तुङ्गं तत्र तत्र जिघांसया ॥ ३३७ ॥
कस्मिंश्चित् पिहितद्वारे तुङ्गं प्रच्छाद्य वेश्मनि ।
दिनानि कतिचिद्दिद्दा तस्थावास्कन्दशङ्किनी ॥ ३३८ ॥
तया स्वर्णप्रदानेन सुमनोमन्तकादयः ।
ब्राह्मणाः समगृह्यन्त ततः प्रायो न्यवर्तत ॥ ३३९ ॥

एवं तस्मिन् महाक्षेपे त्वया दानेन वारिते ।
ययौ विग्रहराजः स भग्नशक्तिर्यथागतं ॥ ३४० ॥
अथ दार्व्यं समासाद्य तुङ्गाद्याः प्रभविष्णवः ।
शनैः कर्दमराजादीन् जघ्नुर्विहितविप्लवान् ॥ ३४१ ॥
सुलक्कनो रक्कसूनुस्तथान्ये मुख्यमन्त्रिणः ।
रुष्टैर्निर्वासितादेशात् तुष्टैस्तैः संप्रवेशिताः ॥ ३४२ ॥
प्रवर्द्धमानवैरेण गूढदूतैर्विसर्जितैः ।
प्रायं विग्रहराजेन ब्राह्मणाः कारिताः पुनः ॥ ३४३ ॥
उत्कोचादित्सया विप्रा भूयः प्रायविधायिनः ।
लब्धस्थैर्येण तुङ्गेन सन्निपत्यापहस्तिताः ॥ ३४४ ॥
तेषां मध्ये वसन् गूढमादित्याख्यः पलायितः ।
हतो विग्रहराजस्य प्रियः कठकवारितः ॥ ३४५ ॥
शस्त्रहतः प्रतीहारो वत्सराजाभिधः पुनः ।
न्यङ्कोतकादिभिर्धावन् जीवग्राहमगृह्यत ॥ ३४६ ॥
ते स्वर्णाग्राहिणो विप्राः सुमनोमत्तकादयः ।
सर्वेऽपि बद्धास्तुङ्गेन कारागारं प्रवेशिताः ॥ ३४७ ॥
अथ फल्गुणनाशेन दृप्ते राजपुरीपतौ ।
तां प्रत्यारब्धिरभवत् क्रुध्यतां सर्वमन्त्रिणां ॥ ३४८ ॥
निपत्य संकटे वीरः पृथ्वीपालाभिधस्ततः ।

